प्रभुपाद श्रीकृष्णचन्द्र गोस्वामि-प्रणीतः

# कर्णानन्दः

(ग्रन्थकारकृत-अर्थकौमुदी-टीका-संयुतः)



भाषान्तरकारः

हितानन्द गोस्वामी

सङ्गणकसंस्करणं दासाभासेन हरिपार्षददासेन कृतम् ।




प्रभुपाद श्री कृष्ण चन्द्र गोस्वामी
आविर्भाव सं· १५८७

प्रभुपाद श्रीकृष्णचन्द्र गोस्वामि-प्रणीतः

# कर्णानन्दः

(ग्रन्थकारकृत-अर्थकौमुदी-टीका-संयुतः)

भाषान्तरकारः
हितानन्द गोस्वामी

मोतीलाल बनारसीदास पब्लिशर्स प्रा० लि०
दिल्ली

सङ्गणकसंस्करणं दासाभासेन हरिपार्षददासेन कृतम् ।

# प्राक्कथन

श्री कृष्णचन्द्र (कृष्णदास) गोस्वामी श्रीमन्महाप्रभु हितहरिवंशचन्द्र गोस्वामिपाद के द्वितीय पुत्र थे। इनका जन्म सं० १५८७ में हुआ था। "कर्णानन्द" इनकी संस्कृत में सर्वोत्तम रचना है। सम्वत् १६३५ की श्रीकृष्ण-जन्माष्टमी को यह ग्रंथ पूर्ण हुआ था। इसके कुछ भाग पर उन्होंने स्वयं टीका की थी; शेष भाग पर टीका श्री प्रबोधानन्द सरस्वती-कृत मिलती है: "तट्टीका च मयारब्धा श्रीप्रबोधेन पूरिता"। इस संस्कृत टीका का नाम "अर्थकौमुदी" है।

श्री रसिकविलास गोस्वामी की "रसिकमोहिनी" और श्री चन्द्रलाल गोस्वामी की पद्यात्मक टीकाएं व्रजभाषा में भी उपलब्ध हैं।

प्रभुपाद कृष्णचन्द्र गोस्वामी संस्कृत के उद्भट विद्वान् और काव्य-रस-मर्मज्ञ थे। "कर्णानन्द" मुक्तक काव्य-ग्रन्थ है। कुछ लोग इसे छन्द-ग्रंथ भी कहते हैं; किन्तु इसमें छन्दों के लक्षण नहीं दिए गए हैं। राधा-माधव की रसमयी लीलाओं और उनके श्रीचरणों में अपनी निष्ठा का सुन्दर चित्रण इसमें सर्वत्र दृष्टिगोचर होता है।

"कर्णानन्द" के रचयिता के यों तो १६ ग्रंथों का उल्लेख राधावल्लभीय ग्रंथों की तालिका (सूची) में किया गया है; किन्तु वर्तमान में केवल तीन ही पुस्तकें इनकी लिखी हुई मिलती हैं: १. राधानुनय-विनोद-काव्यम्; २. उपराधा-सुधानिधि; और ३. पदावली।

"कर्णानन्द" के लेखक ने स्वयं को "कृष्णदास" नाम से ही अभिहित किया है, जैसा कि उनके संस्कृत और संस्कृत-बहुल हिन्दी के ग्रंथों में देखा जाता है।

"श्रीराधावल्लभांघ्र्यम्बुरुहपरिसरे ग्रंथ आविबर्भूव
श्रीवृन्दाकानने तद्रसतृषितमतेः श्रीमतः 'कृष्णदासात्'।

× × × ×

मधुद्रुतसारँगकीरद्विजाकुलकलमरालकृतनादे।
विचलदलौकिकगन्धवातवरलोभितकुसुमरसादे।।
'कृष्णदास' हरिवंशसुतोदितवृन्दावनरससारे।
भ्रमत कुतो मनुजा इह मज्जत प्रेमरसार्णवपारे।।

लेखक के समकालीन ध्रुवदासजी ने अपनी "भक्तनामावली" में सर्वप्रथम——

"कृष्णचन्द्र" के कहत ही मन कौ श्रम मिटि जाय।
विमल भजन सुख सिंधु में रहै चित्त ठहराय।।

"कृष्णचन्द्र" नाम का उल्लेख किया है। तदनन्तर परवर्ती रसिक विलासगोस्वामी ने "कर्णानन्द" की अपनी "रसिकमोहिनी" टीका में

कर्णानंद दुर्बोध महा अति कठिन संस्कृत।
पंडित जग सिर मुकुट प्रकट हित "कृष्णचन्द्र" कृत।।

भी "कृष्णचन्द्र" नाम का ही उल्लेख किया है। नाम द्वारा महापुरुषों के प्रकाशकत्व को व्यञ्जित करने की परम्परा मिलती है। तदनुसार ग्रंथकर्त्ता का नाम "कृष्णचन्द्र" ही सम्प्रदाय के साहित्य में प्रचलित है।

इस ग्रंथ का प्रकाशन फ्रेंच -भाषा में अनुवाद-सहित हो चुका है। संस्कृत का प्रसार इन दिनों रुद्ध-सा हो गया है। अतएव हिन्दी में "कर्णानन्द" के अनुवाद की आवश्यकता का अनुभव किया जा रहा था। उसी उद्देश्य की पूर्ति हेतु यह भावानुवाद प्रस्तुत है।

शरद पूर्णिमा,
सं० २०४६.

——हितानन्द गोस्वामी

# किञ्चिन्निवेदनम्

अस्ति स्वस्तिमयेऽस्मिन् भारते प्रत्यक्षादिप्रमाणतोऽपि शब्दप्रमाणस्य बहुमानः। वैदिकात्कालाच्छब्दप्रमाणकेऽस्मिन्नस्माकं देशे खल्वाप्तानामृषिमर्हर्षिमुनिमहामुनीनां वचनान्याश्रित्य तेषु स्वानुभवसंयोजनयास्माकमाराधनासाधनामार्गः प्रशस्ततां गतः, जीवनमार्गश्च प्रकाशतां यातः। किन्तु भगवच्छङ्कररामानुज-निम्बार्क-मध्व-वल्लभाचार्यैस्तदनुयायिभिश्चैकमेव ब्रह्मसूत्रं, एका एवोपनिषदः, एकामेव च श्रीमद्भगवद्गीतां, परवर्तिभिश्चैकमेव श्रीमद्भागवतमाधृत्य स्वस्वाभिप्रायानुरूपाभिर्व्याख्याभिस्तथा व्याख्यातानि, यथैकान्यपि तानि परस्परभिन्नाननेकानर्थानुपदिशन्ति प्रतीतिपथमुपयन्ति। तेषु चाद्वैत-विशिष्टाद्वैत-द्वैताद्वैत-द्वैत-विशुद्धाद्वैतेषु कतमोऽर्थस्तेषां यथार्थ इत्यत्र विभ्रान्तमतयो मनुजा न क्वचिदप्यास्थां स्थिरीकर्तुं प्रभवन्ति।

श्रीराधावल्लभीयसम्प्रदायप्रवर्तकैः श्रीहितहरिवंशचन्द्रमहाप्रभुभिस्तु ब्रह्मसूत्रादि-व्याख्यानमार्गं तत्र प्रतिपादनीयानि 'वृन्दानि सर्वमहतां (साध्याधनानां) अपहाय दूराद् वृन्दाटवीमनुसर प्रणयेन चेतः', इत्यनेन स्वचेतःसम्बोधनेन सर्वसाधारणजनमनांसि सम्बोध्य तेभ्यः स्वानुभूत्येकमानं दिक्कालाद्यनवच्छिन्नमपि व्यक्तोपासनायां दिक्कालाद्युपहितं किमपि नीलपीतं महः प्रकाशितं निजवाण्या—श्रीराधारससुधानिधिस्तवश्रीयमुनाष्टकश्रीमच्चतुरासीस्फुटवाणी-श्रीमुखपत्रीद्वयात्मिकया पञ्चशाखत्वेन रसकल्पद्रुमायमानया। तस्या अस्या रसमयानि गलितानि फलान्यापीयापीय तज्जन्मवंशोद्भवैर्गोस्वामिस्वरूपैः, तद्विद्यावंशप्रभवैश्चानन्यरसिकैः शिष्यप्रशिष्योपशिष्यैर्ये रसोद्गाराः प्रकाशिताः ते श्रीराधावल्लभीय साहित्यनाम्नाख्याप्यन्ते। गोस्वामिश्रीश्यामलालमहाराजेन च तदीयग्रन्थानां कापि सूची सङ्ग्रथिता, यां पल्लवयित्वा श्रीराधावल्लभीयसाहित्यरत्नावली प्राकाश्यमनीयत। अस्या अवलोकनेन विज्ञायते यथा षोडश्या विक्रमशताब्द्या उत्तरार्धाद्विंश्याः पूर्वार्धं यावदत्र षट्त्रिंशदधिकं शतद्वयं (२३६) श्रीहरिवंशमहाप्रभुकृपाप्राप्तकवित्वप्रसादाः लेखकाश्चत्वारिंशदुत्तरसहस्रं वाणीग्रन्थानां प्राणैषन्निति।

एषु त्रिंशतः संस्कृतकवीनां त्रिंशदुत्तरं शतं संस्कृतकृतीनां परिगण्यते। यत्र गोस्वामिश्रीहरिवंशचन्द्रमहाप्रभोर्द्वितीयस्य तनूजनुषोऽनन्यरसिकविदुषां वरेण्यस्य गोस्वामिश्रीकृष्णचन्द्रप्रभोश्चतुर्दश संस्कृतकृतयः स्मर्यन्ते। उपलभ्यन्ते तु—

१. सटीकः कर्णानन्दः, २. आशास्तवः, ३. व्यासनन्दनाष्टकम्, ४. बृहद्राधाभक्तिमञ्जूषा, ५. मानाष्टपदी प्रथमा, ६. मानाष्टपदी द्वितीया, ७. राधानुनयविनोदकाव्यम्, ८. उपसुधानिधिः, ९. नवरत्नस्तोत्रं चेति नवैव साम्प्रतम्। दशमी कृतिस्तु व्रजभाषामयी श्रीवृन्दावनाष्टकादिरूपा पदावली।

एतासु स्वकृतिषु कर्णानन्दस्य महतीमुपयोगितामनुध्यायता प्रभुपादेन स्वयमेवास्य खल्वर्थकौमुदीनाम्नी टीका प्रारभ्यत, सा च श्रीप्रबोधानन्दसरस्वतीपादैः पूरितेति ग्रन्थान्ते—

**कर्णानन्दाभिधो ग्रंथः कृष्णदासेन निर्मितः।**
**तट्टीका च तदारब्धा श्रीप्रबोधेन पूरिता।**

इत्युल्लेखाज्ज्ञायते। विज्ञायते च कर्णानन्द इति पुंन्निर्देशे ग्रन्थ इति विशेष्यम्। अनेन ग्रन्थपदेनास्य केवलस्तोत्रत्वं केवलकाव्यत्वं वा निरस्यते। स्थाप्यते च साम्प्रदायिकसिद्धान्तसंस्थापनौपयिकतयास्य किमप्यनिर्वचनीयं गौरवम्। ग्रन्थत्वेनैवात्र चेयमर्थकौमुदी टीकापि प्रयोजिता। न खलु प्रसादादिगुणग्राह्यं काव्यं कविकर्त्तृकां विवृतिमपेक्षते। नापि च सा विवृतिर्भावुकहृदयगतां भावयित्रीं प्रतिभामनुक्तानां व्यङ्ग्याद्यर्थानां बोधान्नियन्त्रयितुमीष्टे। ग्रन्थे तु स्वभावाद् 'ग्रन्थग्रन्थिन्यासः श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थीनामेव चाधिकारिणां प्रवेशावसरो विधीयते न सर्वेषाम्। अत एवात्र टीकादौ मङ्गलाचरणे—

**यच्छ्रद्धालवललितं हृदयं जानाति तत्त्वमक्लिष्टम्।**
**तस्य हरेः पदकमलं वन्दे तारोदराब्धिरत्नस्य।**

इत्यनेनाक्लिष्टस्यापि वक्तुमिष्टस्य तत्त्वस्यावगाहने श्रद्धालवललितस्य हृदयस्याधिकारः प्रकाश्यते—श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रिय इतिशास्त्रवचनात्। अयमत्र विशेषः—अन्यत्र श्रद्धासम्पदा सुसम्पन्नोऽपि तत्परतया संयतेन्द्रियतया च युक्तः सन्नेव ज्ञानं लभते, अत एव तदुपेयं तत्त्वं क्लिष्टमाख्यायते। परमत्रास्याक्लिष्टस्य तत्त्वस्य श्रद्धालवेनैव ज्ञानमिति व्यतिरेक उदाहृतः। अपि च—

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।**
**तस्यैते कथिता अर्थाः प्रकाशन्ते महात्मनः॥**

इत्युपनिषदा गुरौ देववद् भक्तिर्विधीयते, अत्र तु तस्य गुरोरिति वक्तव्ये तस्य

हरेरिति कथनेन देवे गुरुदेवे चाभेददृष्टिः शिष्यशिक्षार्थमुपनिबध्यते। इत्थं प्रतिपदं निपुणनिपुणेन विवेचनेन गहनगहनस्य विवेकस्य प्राप्तिः कर्णानन्दामिधस्यास्य ग्रन्थस्य ग्रन्थत्वमभिव्यनक्ति। तदुपलम्भायैव चात्रेयमर्थकौमुदी नाम टीकापेक्ष्यते।

सत्यपि चास्य ग्रन्थत्वे काव्यत्वं न परिहीयते। अत एव श्रद्धानिबद्धया बुद्ध्या सहास्य वक्तुमिष्टस्याक्लिष्टस्य तत्त्वस्य सम्बन्धो नोक्तः, अपि तु श्रद्धालवललितेन हृदयेनैवास्य ज्ञातव्यता वेदनीयता स्वादनीयता च प्रतिपादिता। 'वाग्वैदध्यप्रधानेऽपि रस एवात्र जीवितम्' इत्याग्निपुराणोक्तस्य काव्यलक्षणस्य सर्वसम्मतत्वात्।

कर्णानन्दस्य कथावस्तुसम्बन्धाभावान्नास्ति प्रबन्धकाव्यत्वम्—महाकाव्यत्वम्—काव्यत्वम्-खण्डकाव्यत्वं वा। अपि तु प्रत्येकं पद्यस्य परस्परनैरपेक्ष्येण विवक्षितार्थविश्रान्तिदर्शनादस्ति मुक्तकत्वम्, ततश्च मुक्तककाव्यमिदम्। महाकाव्यादिषु प्रबन्धगतानां नीरसानां निरलङ्काराणामपि पद्यानां पूर्वापरपद्यरसालङ्कारै रसालङ्कारवत्त्वं संभवति, मुक्तककाव्ये तु प्रत्येकं पद्यं स्वकीयैरेव रसगुणरीतिवृत्त्यलङ्कारै रसादिमत्त्वं बिभर्तीति महान् भारो भवति मुक्तककवेः। स च श्रीमता गोस्वामिश्रीकृष्णचन्द्रप्रभुणा निपुणं निरूढः। यद्यप्यत्र——

**आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्।**

इति मङ्गलश्लोकलक्षणानुगततया नवत्युत्तरशतस्यापि पद्यानां विषयदृष्ट्या त्रय एव विषयाः प्रतिपाद्याः सन्ति। आशीर्वादः, नमस्कारः, वस्तुनिर्देशश्च। आशीर्वादो द्विविधः—स्वस्मै, परस्मै च। नमस्कारोऽपि द्विविधः—जयत्यर्थाक्षिप्तः, साक्षादुक्तश्च। वस्तुनिर्देशस्तु——विभावानुभावव्यभिचारिभावादिरूपः। अमीभिर्विभावानुभावव्यभिचारिभावैर्व्यज्यमानः श्रीराधाश्यामसुन्दराश्रयविषयकः स्थायी रतिभावः सर्वत्र कवेः स्वेष्टदेवविषयकस्य रतिभावस्याङ्गतां प्रतिपद्यमानो रसस्याङ्गतां भावस्य चाङ्गितां प्रकाश्य भावध्वनावेव विरमतीति भावप्रधानमिदं मुक्तककाव्यम्। अत्र खलु शतं पद्यान्याशीर्वादात्मकानि, नवपद्यानि नमस्कारपराणि, एकाशीतिस्तु वस्तुनिर्देशकानीति विषयविभागः। इत्थं च भावमयतानुभूतीच्छाशक्तिबोधवृत्तिप्रभृतिभिर्मनौवैज्ञानिकैराधारैः, रागात्मकप्रवृत्तिप्रवणताभावान्विति-सङ्क्षिप्तता-सहजान्तःप्रेरणाप्रसूतता-गेयतामुख्यैर्लक्षणैश्चास्य मुक्तककाव्यस्य कर्णानन्दस्य गीतिकाव्यतापि प्रतीतिपथमायातीत्यस्य भावप्रधानस्य गीतिकाव्यस्य सहृदयहृदयेषु द्युतिदीप्तिविकासकरत्वेन माधुर्योजःप्रसादगुणशालित्वम्, दीर्घसमासमध्यमसमासासमासरूपाणां सङ्घटनानां गौडीपाञ्चालीवैदर्भीरीतिप्रयोजकत्वं च संक्षेपतो निरूप्यते।

'काव्यं ग्राह्यमलङ्कारात्' इति 'सालङ्कारस्य काव्यता' इति चालङ्कारिका-

णामनुरोधात् पर्यालोच्यमानेऽस्मिन् कर्णानन्दे प्रथमात्सप्तदशमेकविंशाच्च सप्तविंशं पद्यंयावत्पञ्चविंशतौ पद्येषु वृत्त्यनुप्रासः, इतोऽतिरिक्तेष्वप्ययम् यत्रतत्र पञ्चसु विराजते। षट्सु पद्येष्वन्त्यानुप्रासः त्रिषु च च्छेकानुप्रासः। अर्थालङ्कारेष्वपि पद्यानां विंशतावुपमा, सप्तदशसु रूपकम्, त्रयोदशसु परिकरः, षट्सु व्यतिरेकः, पञ्चस्वर्थान्तरन्यासः, चतुर्षु स्वभावोक्तिः, चतुर्ष्वेवाक्षेपः. चतुर्षु परिसङ्ख्या, त्रिषूत्प्रेक्षा, त्रिषूदात्तः, द्वयोर्द्वयोदीपक-विशेषोक्ति-विनोक्ति-कैतवापह्नुत्यतिशयोक्तयः, एकैकस्मिंश्च लेशदृष्टान्तश्लेषयथासङ्ख्यवीप्सासमाधितद्गुणपरिकराङ्कुरविषम-समुच्चयव्याजस्तुतिभ्रान्तिमन्तोऽलङ्कारा रमणीयार्थप्रतिपादकशब्दस्वरूपेऽस्मिन् गीतिकाव्ये कृतास्पदानि सन्ति । रसाद्यलङ्कारेष्वपि सप्तविंशतौ पद्येषु प्रेयान्, षट्सु रसवान्, त्रिषु भावसन्धिः, एकस्मिंश्च भावशबलता रसिकजनहृदयानन्दाय कल्पमाना अन्तर्बहिः कर्णानन्ददायितया गीतिकाव्यस्यास्य नामानुरूपतामभिव्यञ्यति ।

इत्यं चेदं गीतिकाव्यं चतुस्त्रिंशदलङ्कारनिदर्शनैरलङ्कार्यतां भजमानमपि यथालङ्कारग्रन्थ इति व्यपदेशं न प्राप्नोति तथैवास्य द्विषष्टितमात्पद्यादन्तिमं पद्यं यावदेकाक्षरादिषड्विंशत्यक्षरपादानाम् उक्तात्युक्ता मध्याप्रतिष्ठासुप्रतिष्ठागायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतिकृतिप्रकृत्याकृतिविकृतिसङ्कृत्यतिकृत्युत्कृतीनां प्रस्तारक्रमेण प्राप्तानां श्रीप्रभृतिस्रग्धरान्तानां त्रयोविंशत्यधिकशतस्य वर्णिकवृत्तानामुदाहरणभूतैः पद्यैश्छन्दोग्रन्थ इति व्यवहारो नोपपद्यते। न खलु लक्ष्यमात्रनिर्देशेन कस्यचिद् ग्रन्थस्य तच्छास्त्रनाम्ना भट्टिकाव्यस्य व्याकरणग्रन्थनामवद्व्यवहारो भवति । अत एव——

**न तच्छास्त्रं न तच्छिल्पं न सा विद्या न सा कला ।**
**जायते यन्न काव्याङ्गमहो भारो महान् कवेः ॥**

**इत्युक्तमभियुक्तैः ।**

यद्यप्यस्माभिष्टीकान्तश्लोकाधारेण कर्णानन्दस्य ग्रन्थत्वं, काव्यलक्षणानुगमाच्च काव्यत्वम्, काव्यभेददृष्ट्या मुक्तककाव्यत्वम्, आधुनिकवैज्ञानिकाधारपरिभाषात्रयेण च गीतिकाव्यत्वं प्रतिपादितं तथापि श्रीराधारससुधानिधिस्तवान्त्यश्लोकसङ्केतेन कर्णानन्दः स्तव इति विशेष्यविशेषणभावेनापि पुन्निर्देशः सङ्गमयितुं शक्यते। यथा श्रीराधारससुधानिधिः स्तवः, तथैव कर्णानन्दः स्तव इति । स चापि——

**अद्भुतानन्दलोभश्चेन्नाम्ना रससुधानिधिः ।**
**स्तवोऽयं कर्णकलशैर्गृहीत्वा पीयतां बुधाः ॥ इति प्रेरणीयतामर्हति ।**

'गुणैर्हि सर्वत्र पदं निधीयते' इत्याभाणकं सत्यापयन्नयं कर्णानन्दो भारतीयासु संस्कृत-व्रजभाषा-हिन्दीभाषास्विव वैदेशिक्यां फ्रेञ्चभाषायामपि भाषान्तरितः स्वकीयं किमपि गुणगौरवं ख्यापयति। श्रीराधावल्लभीयसम्प्रदायस्य च साहित्यश्रिया सह काञ्चित् कमनीयां कीर्तिमपि विस्तारयति।

परमस्य कृत्स्नस्यापि स्तवस्यार्थकौमुदीटीकामाधृतं हिन्दीभाषान्तरमद्यावधि प्रकाशितं नाभूदिति सुगृहीतनामधेयैरस्मद्गुरुवर्यैः श्रीहितानन्दगोस्वामिपादैस्तादृशेन सरलसरलेन सरससरसेन च हिन्दीभाषान्तरेण संयोज्य सम्पादितः। स चास्माभिरभ्यर्थितेन श्रीमोतीलाल बनारसीदासप्रकाशनाधिकारिणा श्रीमता नरेन्द्रप्रकाशजैनेन सादरं प्रकाशितः। अत्र विद्वद्वरेण्यैर्देशविदेशस्थेषु विश्वविद्यालयेषु प्राप्तप्रतिष्ठैः दिल्लीविश्वविद्यालयस्य संस्कृतविभागाचार्यैः डा० सत्यव्रतशास्त्रिभिर्भूमिकां विलिख्य ग्रन्थभाषापरिच्छेदं च विधाय चिराय स्मो वयमनुगृहीताः। यैः कैश्चित्सुहृद्भिः श्रीशरच्चन्द्रकुशलनीलकण्ठशर्मादिभिः पाण्डुलिपिप्रतिलेखनेन, तट्टङ्कणेन, तत्प्रूफादिसंशोधनेन चात्र सहयोगः प्रदत्तस्तान् सर्वानपि स्वपक्षतो धन्यवादैः श्रीमद्गुरुवरपक्षतश्च शुभाशीर्वादैः सम्भावयामि।

अनन्यरसिकानां विदुषामाश्रवः—

डी-७७६, सरस्वतीविहारः
दिल्ली-११००३४
२१-५-८८

**अमीरचन्द्र शास्त्री साहित्याचार्यः**
(भारतराष्ट्रपतिसम्मानित आचार्यः)
भू.पू. उपप्राचार्यः श्रीलालबहादुरशास्त्रीसंस्कृतविद्यापीठस्य

# भूमिका

आचार्य भामह ने काव्यालंकार में मुक्तक काव्य का लक्षण करते हुए कहा—'मुक्तकं श्लोकएकैकश्चमत्कारक्षमः सताम्', मुक्तक काव्य वह है जिसका एक-एक श्लोक विद्वानों को चमत्कृत करने की क्षमता रखता हो। सम्पूर्ण काव्य का तो कहना ही क्या, इसके प्रत्येक पद्य में चमत्कार होता है, एक विलक्षणता होती है जो सहृदयों के हृदय को कहीं गहरे से स्पर्श कर जाती है। प्रत्येक पद्य अपने में पूर्ण होता है, किसी कथानक-विशेष से बंधा होना उसकी अपरिहार्यता नहीं। हां, किसी विषय-विशेष से वह अवश्य जुड़ा होता है। इस दृष्टि से वह मुक्तक, मुक्त है। मुक्त एवं मुक्तक में कोई अर्थभेद नहीं, मुक्तक में स्वार्थे कन् से स्वार्थ अर्थात् मुक्त के ही अर्थ में क (कन्) लगा है।

इसी मुक्तक शैली में रचा गया है श्रीकृष्णचन्द्र प्रभुपाद विरचित कर्णानन्द काव्य जो 'यथा नाम तथा गुणः' के अनुसार वास्तव में कर्णानन्द है। एक भक्त हृदय के भाव इसमें मुखरित हो उठे हैं। अनेक अलंकारों एवं छन्दों से प्रभुपाद ने इसे सजाया है। फलतः संस्कृत वाड्.मय का यह एक अत्युत्कृष्ट काव्य बन गया है। यद्यपि भाषा इसकी प्रायः सरल ही है तो भी अर्थ सामान्य संस्कृतज्ञ को भी आसानी से समझ में आ जाय–यह दृष्टि में रख इसके कुछ भाग पर संस्कृत टीका प्रभुपाद ने स्वयं प्रस्तुत की। शेष भाग पर उसे लिखा श्री प्रबोधानन्द सरस्वती जी ने। जनसाधारण भी इसका आस्वादन कर सके–इस दृष्टि से इसका हिन्दी अनुवाद आचार्य श्री हितानन्द गोस्वामी जी ने किया है। इससे पूर्व व्रजभाषा में पद्यात्मक टीकाएं इसकी थीं। खड़ी बोली में इस पर कुछ लिखा नहीं गया था। उसमें पद्यों का भाव प्रस्तुत करने का यह पहला प्रयास है। यह अक्षरानुवाद भी है और भावानुवाद भी। यही इसकी विशेषता है।

मूल पर स्वयं टीका लिखने की परम्परा भारत में उत्तरमध्ययुग से प्रारम्भ हुई। अनेक कवियों और आचार्यों ने अपने ग्रन्थों पर स्वयं टीकाएं लिखीं अथवा उनका संक्षिप्त तथा संक्षिप्ततम रूप प्रस्तुत किया। इसका अपना एक लाभ भी है। जिस भाव से ग्रन्थकार लिखता है उसे वह स्वयं जिस प्रकार प्रकट करने में समर्थ हो सकता है, उस तरह शायद अन्य कोई टीकाकार या अनुवादक नहीं। अनेक इस प्रकार के उदाहरण मिलते हैं जहां टीकाकार मूल से वह अर्थ निकाल लेते हैं जो

कदाचित् स्वयं ग्रन्थकार के मन में नहीं होता। ग्रन्थकार अपनी टीका में उन सभी तत्त्वों पर भी प्रकाश डाल सकता है जो ग्रन्थ लिखते समय उसके प्रेरक रहे थे।

महाप्रभु श्रीकृष्णचन्द्र गोस्वामी का भाषा पर असामान्य अधिकार है। संस्कृत व्याकरण का उनका ज्ञान भी अद्भुत है। उनके काव्य में व्याकरण के अनेक इस प्रकार के प्रयोग हैं जो उनकी व्याकरणशास्त्र में गहरी पैठ को द्योतित करते हैं। वैयासकिः (पद्य ४), स्वपतेः (पद्य ३७), वावदीमि (पद्य ४०), वर्वरीतु (पद्य ५५), चाकशीतु (पद्य ५८), बाभज्ये (पद्य १२०), व्यात्युक्षीम् (पद्य १६६) आदि शब्द इसी कोटि के हैं। इन प्रयोगों की विशेषता यह है कि ये प्रवाहपतित हैं, प्रवाह को कहीं अवरुद्ध नहीं करते। जानबूझकर अपना पाण्डित्य-प्रदर्शन के लिए प्रयुक्त किये गये हैं, ऐसे भी नहीं लगते। वे इस ढंग से जड़ दिये गये हैं कि पद्यहार की शोभा ही उनसे बढ़ी है। इस कोटि के ही कतिपय शब्द उनके हैं जो अप्रसिद्ध होने पर भी श्रीमद्भागवतादि में प्रयुक्त होने के कारण अभ्यर्हणीयता की कोटि में आ जाने से एवंच प्रवाह को अवरुद्ध न करने से रचना को भूषित ही करते हैं, दूषित नहीं। इन शब्दों में विशेष उल्लेखनीय हैं मन्त्रार्थक मनु (पद्य ६), समीपार्थक अधिक प्रसिद्ध अन्तिक के स्थान पर अन्ति (पद्य १४), स्वर्णार्थक पुरट (पद्य ५३), विद्युदर्थक क्षणरुचि (पद्य ७६), लीलानुचिन्तनार्थक विकूल (पद्य ९५), देवार्थक सुपर्वन् (पद्य ११७), भ्रू (भवों) के अर्थ का चिल्लि (पद्य १२४), कालार्थक अनिमिष (पद्य १३४), वशीकरणार्थक कार्मण (पद्य १५७), मरकतमणिवाची महानील (पद्य १६६), कामार्थक भव (पद्य १७३) आदि।

कहीं-कहीं महाप्रभु ने रूढि को छोड़ यौगिक अर्थ का आश्रय लिया है। औदरिक शब्द का पेटू अर्थ न लेकर उन्होंने उदरसम्बन्धी (पद्य १०१) अर्थ लिया है। इसी प्रकार हृद्य शब्द का हृद्गत (पद्य १०३) एवञ्च वंशी (कृष्णः) (पद्य ६९) का वंशोऽस्यास्तीति, वंशी=बांसुरी वाले श्रीकृष्ण अर्थ उन्होंने अपनाया है। इस प्रकार के प्रयोग निश्चय ही विद्वानों के लिये उन्हें कुछ गहराई से सोचने को बाध्य करने के कारण अत्यन्त आनन्ददायक हैं—उत्सवः सुधियामलम्।

श्रीप्रभुपाद का शब्दभण्डार अतीव विपुल है। उदाहरण के लिये श्री यमुना जी के लिये उन्होंने १७ विभिन्न शब्दों का प्रयोग किया है। कालिन्दी (पद्य ६, ५०, १६३), रविजा (पद्य ७), भास्वत्सुता (पद्य ४७), यमुना (पद्य ६०, ६१, १०९, १२१, १४२, १७४), भानुजा (पद्य ९३, १६७), रविदुहिता (पद्य ९४, ११९, १५०), कलिन्दतनया (पद्य १०७), ऊष्मधामपुत्री (पद्य १२०), सूरजा (पद्य १४४, १६५), अर्यमदुहिता (पद्य १६६), दिनाधीशदुहिता (पद्य १६८), कृष्णा (पद्य १६९), सिन्धु (पद्य १७३), यमस्वसा (पद्य १७५)। श्री यमुना जी सूर्य की पुत्री हैं। सूर्य के अनेक पर्यायवाची शब्दों तथा पुत्री के भी अनेक पर्यायवाची

शब्दों का उन्होंने इसके लिये उपयोग किया है। इस कारण अनेक स्वोपज्ञ शब्दों का प्रयोग करने का उन्हें अवसर मिल गया है जिन्हें आधुनिक भाषाशास्त्री स्वनिर्मित शब्द की संज्ञा देते हैं। इसी प्रकार यम की बहिन होने के कारण भी श्री यमुना जी को प्रभुपाद जी ने यमस्वसा शब्द से अभिहित किया है। भगवान् श्रीकृष्ण के लिये श्रीप्रभुपाद जी ने २२ विभिन्न शब्दों का प्रयोग किया है—हरि (पद्य १, १६, १९, २०, २१, २२, ३०, ३२, ३८, ५४, ६०, ७६, ७९, ९०, १०२, १०३, १०७, ११३, ११७, १२९, १३४, १६०), कृष्ण (पद्य १०, १२, १७, २८, २९, ३५, ३७, ४१-४३, ५१, ५२, ५५, ६२, ६६, ६९, ७१, ७३, ८०, ८७, ८८, ९१, ९५, १०१, १०४, १०६, १०९, ११०, ११५, ११९, १२२, १२५, १३३, १३९, १४०, १५६), कृष्णचन्द्र (पद्य २४, १६६), नन्दसूनु (पद्य ५), नन्दकिशोर (पद्य ६), वृषभानुजासहचर (पद्य ९), सुत्रामा (पद्य १३), अच्युत (पद्य २३, १५९), मुकुन्द (पद्य २५, १४६) गोविन्द (पद्य २६), ब्रजराजसूनु (पद्य ३६), नन्दनन्दन (पद्य ३९, १४०), राधाधिपति (पद्य ४५), राधाधव (पद्य ५७), राधिकावल्लभ (पद्य ७, ६८), ब्रजपति (पद्य ७०), राधिकाप्राणनाथ (पद्य ७५), राधिकाधव (पद्य ८२), वृषभानुजापति (पद्य ८६), राधिकापरिवृढ (पद्य १९०), राधापति (पद्य ११४, १४७), वल्लवराज (पद्य १२६), राधाजानि (पद्य १४४, १५१, १५८), वल्लव (पद्य १४५), कृष्णदेव (पद्य १६३)। हरि, कृष्ण, कृष्णचन्द्र, मुकुन्द, अच्युत आदि पूर्वप्रसिद्ध पदों के साथ श्रीप्रभुपाद जी ने श्रीराधिकाजी के प्राणप्रिय होने के कारण राधाधव, राधिकावल्लभ, राधिका-परिवृढ आदि अनेक स्वोपज्ञ शब्दों का श्री ठाकुर जी के लिये प्रयोग किया है। गोपाल होने के कारण उन्हें वल्लव अथवा वल्लवराज भी कहा है। सुत्रामा शब्द का अर्थ मूलतः इन्द्र होता है, पर स्वामी अर्थ लेकर उन्होंने श्री ठाकुर जी के लिए उसका प्रयोग कर दिया है।

श्री राधिका जी के लिये सर्वाधिक राधा या राधिका शब्दों का प्रयोग किया गया है। इनके साथ वृषभानु की पुत्री होने के कारण वृषभानुजा (पद्य ९, ८६, १७४), वार्षमानवी (पद्य १५५) शब्दों का भी इनके लिये प्रयोग किया गया है। एक स्थान (पद्य ९२) पर उन्हें हितासुता भी कहा है, जो साम्प्रदायिक रहस्य से सम्बन्धित है।

इस प्रकार एक ही के लिये अनेक शब्दों का प्रयोग कर अपनी विपुल शब्दराशि का श्री कृष्णचन्द्र महाप्रभु जी ने परिचय दिया है।

सम्पूर्ण काव्य की भाषा अत्यन्त प्रवाहमयी है। किसी-किसी पद्य का प्रवाह तो चरमोत्कर्ष तक पहुंच गया है। उदाहरणार्थ—

**धनाभिमानस्तु धनप्रियाणां**
**रूपाभिमानः प्रमदोत्तमानाम् ।**
**विद्याभिमानश्च यथा द्विजानां**
**तथैव मे कृष्णकृपाभिमानः ॥ ४३ ॥**

जिस प्रकार धन के प्रेमियों को धन का अभिमान होता है, श्रेष्ठ (सुन्दर) स्त्रियों को सुन्दरता का अभिमान होता है, ब्राह्मणों को विद्या का अभिमान होता है उसी प्रकार मुझे श्रीकृष्ण की कृपा का अभिमान है ।

प्रभुपाद ने उपमा आदि अलंकारों से अपनी कविता को अत्यन्त आकर्षक रूप से सजाया है । कहीं-कहीं तो उसकी झड़ी-सी लग गई है । उपरिनिर्दिष्ट पद्य इसी कोटि का है । इसी कोटि के कतिपय अन्य पद्यों में निम्नलिखित पद्य विशेष उल्लेखनीय हैं—

**यथा सदस्यात्मयशोनिबन्धनै-**
**र्यशस्विनः कामिन अङ्गनोक्तिभिः ।**
**शिशूदितैः स्निग्धपितुर्यथा तथा**
**ममारविन्दाक्षजनोदितैः सुखम् ॥ ४४ ॥**

जिस प्रकार यशस्वी व्यक्ति को सभा में अपने यश का वर्णन करने वाले वचनों से, कामी जन को प्रेयसी के वचनों से और स्नेही पिता को शिशु की बोली से सुख मिलता है उसी प्रकार मुझे कमलनेत्र श्री प्रभु के भक्तजनों के वचनों से सुख मिलता है ।

यह झड़ी जिसे अलंकारशास्त्र में मालोपमा के पारिभाषिक नाम से अभिहित किया गया है, काव्य में केवल उपमा के सन्दर्भ में ही नहीं पाई जाती अपितु रूपक के भी । निम्नलिखित पद्य इसका एक सुन्दर उदाहरण है—

**तप्ते काचन कौमुदी वितृषिते पीयूषपाथोवहा**
**लुब्धे कश्चन शेवधिर्मृतिमये जीवातुराख्यायिका ।**
**सा राधाधिपतेर्मम श्रुतिमलङ्कुर्याद्यदि स्यामहं**
**श्वादोकस्यपि माऽस्तु वा जनिरलं धिग्वैधसीमन्यथा ॥ ४५ ॥**

श्रीराधापति की वह कथा (संसार-ताप से) संतप्त प्राणियों के लिये एक प्रकार की चांदनी है, प्यासों के लिए अमृत की नदी है, लालची लोगों के लिये कोई खजाना

है, मृत्यु से डरने वालों के लिये जीवनदात्री है। वह यदि मेरे श्रवणगोचर होती है तो चाण्डाल के घर में होने पर भी मेरा जन्म सार्थक है। अन्यथा ब्रह्मा की पदवी को भी मैं धिक्कारता हूं।

शब्दालंकारों में अनुप्रास की छटा काव्य में बहुत लुभावनी है। यह सम्पूर्ण काव्य में व्याप्त है तो भी निदर्शनार्थ केवल एक उदाहरण प्रस्तुत किया जा रहा है जिसमें अन्त्यानुप्रास बहुत सुन्दर बन पड़ा है—

**भास्वत्सुतातटकुटीरतलैकवासी**
**वृन्दाटवीललितवीथिचये विलासी।**
**श्रीराधिकावदनचन्द्रसुधैकजीव**
**सोऽयं ममामितसुलाभगणैकनीवी॥ ४७॥**

कवि की यह एक बड़ी विशेषता होती है कि वह शब्दों के माध्यम से किसी वर्ण्य विषय का एक पूरा का पूरा चित्र ही खींच दे। वह चित्र अपने में इतना पूर्ण हो कि पाठक अथवा श्रोता अपने मानस चक्षुओं से उसे साक्षात् कर सके। इसी प्रकार का एक शब्दचित्र महाकवि प्रभुपाद ने निम्नलिखित पद्य में प्रस्तुत किया है—

**श्यामाम्भोरुहकोषगर्भवपुषं किञ्जल्कगौराम्बरं**
**नीलग्रीवशिखण्डमण्डितकचं गण्डस्फुरत्कुण्डलम्।**
**किञ्चिद्वक्रिमशोभिहारलतिकं पर्यायलोलाङ्गुलिं**
**तिर्यक्कण्ठममन्दवेणुनिरतं ध्यायामि राधाधवम्॥ ५७॥**

मैं राधापति का ध्यान करता हूं जिनका शरीर नील कमल की कलिका के भीतरी भाग के समान है, जिनके वस्त्र केसर के समान गौर (=पीत) हैं, जिनके केश मोर पंखों से सुशोभित हैं, जिनके कपोलों पर कुण्डल (प्रतिबिम्बित होकर) चमक रहे हैं, किंचिद् बांके होने के कारण जिनके हार की लड़ी शोभित हो रही है, बारी-बारी से जिनकी उंगलियां चल रही हैं, गर्दन बांकी किये जो निरन्तर वंशी बजाने में निरत हैं।

इसी प्रकार का एक शब्दचित्र एक अन्य पद्य में भी प्रभुपाद ने प्रस्तुत किया है—

**भुजगरिपुशिखण्डोत्तंसमालोलचक्षु-**
**र्भ्रूकुटिललितभङ्गिश्रान्तभृङ्गाभकेशम्।**

मृदुपवननिकुञ्चद्वेणुसक्ताधरोष्ठं
स्फुरतु मनसि साचिग्रीवमास्यं विभोर्मे ॥ ५६ ॥

प्रभु का बांकी ग्रीवावाला मुख मेरे मन में स्फुरित हो जिसमें मोर पंख कर्णभूषण हैं, चंचल नयन हैं, भवों की मनोहारी वक्रिमा है, थके भंवरों के समान केश हैं और मन्द पवन के कारण सम्पुटाकार होते हुए वंशी से लगे होंठ हैं।

प्रस्तुत पद्य में केशों की उपमा थके-हारे भंवरों से देकर महाप्रभु ने आश्चर्य किया है। थके-हारे भंवरे जहां हों वहीं जम जाते हैं उसी प्रकार के केश ठाकुर जी के भी हैं। हवा में उड़ते हुए, कुछ उलझे हुए नहीं। कारण स्पष्ट है। पवन को मृदु कहा गया है। प्रस्तुत उपमा सर्वथा मौलिक होने के कारण अयोनिज अर्थ के अन्तर्गत आती है।

काव्य में एक पद्य में एक पद, सिन्धु, की सात बार आवृत्ति है। प्रत्येक आवृत्ति में अपना एक चमत्कार है। इससे सम्पूर्ण पद्य में एक अपूर्व प्रवाह की सृष्टि हुई है—

माधुर्यसिन्धुरमलच्छविसारसिन्धु–
र्लावण्यसिन्धुरखिलाद्भुतकेलिसिन्धुः।
चातुर्यसिन्धुरतिवेलदयैकसिन्धु-
र्जीयादसौ रसिकवृन्दसुदैवसिन्धुः ॥

मधुरता के सागर, उत्कृष्ट निर्मल छवि के उदधि, लावण्य के समुद्र, समस्त अद्भुत केलियों के सागर, चातुर्य के वारिधि, अतिशय दया के सागर, रसिक जनों के भाग्यरत्नाकर उनकी जय हो। श्रीराधारससुधानिधि के "वैदग्ध्यसिन्धुरनुरागरसैकसिन्धु' इत्यादि पद्य की मनोज्ञ छाया इस पद्य में है।

एक उद्भट विद्वान् के अन्तर्मन में अनेक ग्रन्थों का पारायण करने के कारण प्राचीन कृतियों की नाना पंक्तियां चक्कर काटती रहती हैं। जब वह अपनी कृति का प्रणयन कर रहा होता है तो वे पंक्तियां प्रसंग-विशेष के प्रभाव से अनायास ही बाहर प्रकट हो उठती हैं। उसकी कृति में न केवल भावों में ही अपितु शब्दों में उनकी छाया झलकने लगती है। इसी प्रकार का प्रभुपाद का है एक पद्य—

तूर्णं विनश्यतु विभूतिरपैतु कीर्ति–
र्जीर्तिर्विलुम्पतु च कुप्यतु सर्वलोकः।
अद्यैव वा पततु देहमियं न हानि–
र्हा ! नीरजाक्ष मयि तिष्ठतु ते पदाशा ॥ ३४ ॥

जिस पर भर्तृहरि के पद्य—

**निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु**
**लक्ष्मीः समाविशतु गच्छतु वा यथेच्छम् ।**
**अद्यैव वा मरणमस्तु युगान्तरे वा**
**न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥**

की छाया स्पष्ट है ।

जैसा कि पहले कहा गया है, श्रीकर्णानन्द काव्य एक भक्त के अपने इष्टदेव के प्रति हृदयोद्गार है । भक्त के लिये श्री हरि की लीलाएं ही सब कुछ हैं । उसका मन उन्हीं में रमा है । अपनी सार्थकता वह उन्हीं में अनुभव करता है । उसे पाने के लिये और कुछ चाहिये नहीं । शास्त्रादि का उनके लिये कोई अर्थ नहीं । तर्क, अलंकार, वेदान्त, इन सबका उसके लिये कोई मूल्य नहीं है । उसका कहना है कि प्रतिवादियों का मुंह बन्द करने के लिये जो तर्कादि का अभ्यास करते हैं वे करते रहें, आलंकारिक काव्यादि की रचना में लगे रहें, वेदान्ती वेदान्त में अपनी बुद्धि गड़ाये ब्रह्मज्ञान प्राप्त करते रहें । हमें तो निकुंज के रसिक श्रीकृष्ण की लीलाओं में ही रस है । हमारा मन तो उन्हीं में ही रमता है—

**वादीन्द्राः प्रतिवादिनोऽभिभवितुं तर्कादि सञ्चिन्वतां**
**येऽलङ्कारसादिदक्षिणहृदस्ते काव्यमातन्वताम् ।**
**ये वेदान्तनितान्तदत्तमतयस्ते ब्रह्म सम्मन्वतां**
**केचिद्ये तु वयं निकुञ्जरसिकक्रीडाविनोदाः स्फुटम् ॥ ८ ॥**

भक्त श्रीकृष्ण तथा श्रीराधिका युगल की प्रेमलीलाओं का वर्णन करते हैं और उसी में सार्थकता मानते हैं । श्री जी का रूठना, ठाकुर जी की मनुहार, दोनों का रासविलास, सखियों का हास-परिहास, वृन्दावन कुंजों में उन दोनों की केलियां, ये सभी उसका सर्वस्व है । ठाकुर जी के भक्तों के दर्शन करने एवं उनके वचन सुनने को वे लालायित हैं । श्री यमुना जी के कूल उनकी आंखों के आगे रहें, यही उनकी सतत कामना है ।

श्री कर्णानन्द जैसे सुन्दर मनोहारी काव्य की टीका भी उसी कोटि की होनी चाहिये और वह स्वयं काव्य-रचयिता ही कर सकते थे । टीका के विषय में उनका स्वयं का मूल्यांकन (लेखक से बढ़कर उसकी कृति का कोई मूल्यांकन नहीं कर सकता) कितना सटीक है—

**मिताक्षरार्थगम्भीरा धीरान्तर्मोददायिनी ।**
**व्याकृतिस्तन्यते श्रीमत्कर्णानन्दप्रबोधिनी ।। ३ ।।**

संक्षिप्त, अर्थगम्भीर, विद्वानों के हृदय को आनन्दप्रद कर्णानन्दप्रबोधिनी नामक व्याख्या रची जा रही है।

श्री कर्णानन्दकाव्य में १२३ छन्दों का प्रयोग श्रीप्रभुपाद ने किया है। इतने अधिक छन्द शायद ही किसी अन्य एक काव्य में प्रयुक्त हुए हों। इस दृष्टि से यह छन्दों का निदर्शन-काव्य बन गया है। इतने प्रसिद्ध-अप्रसिद्ध छन्दों का प्रयोग होने पर भी काव्य में कहीं दुरूहता नहीं आई। उसका प्रसाद गुण तदवस्थ बना रहा है। यह अपने में एक चमत्कार से कम नहीं है।

काव्यरचना जितना महत्त्वपूर्ण है उतना ही उसका प्रकाशन भी। यह प्रकाशन ही उसे सहृदय पाठकों तक पहुंचाता है जिससे कि वे इसका रसास्वाद कर पाने में समर्थ होते हैं।

काव्य प्रकाशित होकर सुधीजनों को उपलब्ध होने जा रहा है, यह अपने में परम संतोष का विषय है। इसके माध्यम से वे भी भक्तिरस में निमग्न होकर जीवन को सार्थक कर सकेंगे, श्री ठाकुर जी की लीलाओं में रम सकेंगे और अपना इहलोक और परलोक सुधार सकेंगे।

आचार्य श्री हितानन्द जी महाराज ने सुन्दर ललित हिन्दी अनुवाद प्रस्तुत कर काव्य को सामान्य पाठक के लिये सुग्राह्य बना दिया है। काव्य का मर्म उन्होंने पकड़ा है और बहुजनहिताय तथा बहुजनसुखाय उसे सरल हिन्दी में उद्घाटित कर दिया है जिसके लिए वे कोटिशः धन्यवाद के पात्र हैं।

**सत्यव्रत शास्त्री**
आचार्य, संस्कृत विभाग, दिल्ली विश्वविद्यालय
भूतपूर्व कुलपति,
श्री जगन्नाथ संस्कृत विश्वविद्यालय
पुरी, उड़ीसा।

दिल्ली
5.7.88

गोस्वामी श्रीकृष्णचन्द्र प्रभु कृत—

# कर्णानन्द

श्रीकृष्णचन्द्र प्रभुपाद श्रीहित महाप्रभु के द्वितीय पुत्र थे। इनका जन्म सं० 1586 में हुआ था। अनेक संस्कृत रचनाओं का प्रणयन इनके द्वारा हुआ था। "कर्णानन्द" इनकी सर्वोत्तम रचना है। यह ग्रन्थ सं० 1635 की कृष्णाष्टमी को पूर्ण हुआ। इसके कुछ भाग पर उन्होंने स्वयं टीका लिखी है और शेष भाग पर टीका श्री प्रबोधानन्द सरस्वती कृत है—"तट्टीका च मयारब्धा श्रीप्रबोधेन पूरिता।" श्रीरसिकलाल गोस्वामी एवं श्रीचन्द्रलाल गोस्वामी की ब्रजभाषा में पद्यात्मक टीकाएं भी उपलब्ध हैं। प्रभुपाद संस्कृत के उद्भट विद्वान् थे और काव्य-रस के मर्मज्ञ थे। "कर्णानन्द" मुक्तक काव्य है और इसमें श्रीराधाश्यामसुन्दर की अपूर्व लीलाओं का सुन्दर शैली में वर्णन किया गया है। इष्ट-निष्ठा इसमें कूट-कूटकर भरी हुई है।

## ।। श्रीराधावल्लभो जयति ।।

### ।। श्रीहितहरिवंशचन्द्रो जयति ।।

### मंगलाचरण

**यच्छ्रद्धालवललितं हृदयं जानाति तत्त्वमक्लिष्टम् ।**
**तस्य हरेः पदकमलं वन्दे तारोदराब्धिरत्नस्य ।।1।।**

जिनमें लेश-मात्र श्रद्धा उत्पन्न होने पर हृदय ललित (सुन्दर) बन जाता है, और सरलता से तत्त्व वस्तु को जानने में समर्थ हो जाता है, ऐसे ताराराानी के उदर-सागर में से जन्म लेने वाले रत्न, हरि (श्रीहरिवंश) के चरण-कमलों की मैं वन्दना करता हूँ। 1।

मूल— **फलिताक्षरसंभासा, कृष्णकीर्तिविधुश्रिता ।**
**बोधचक्षुःप्रसादस्य, हेतुरेषार्थकौमुदी ।।2।।**

अर्थ— श्रीश्यामसुन्दर के यश-चन्द्र की यह अर्थ-रूपी चाँदनी अक्षरों के माध्यम से ज्ञान-चक्षुओं को प्रसन्न करने हेतु छिटकी हुई है। 2।

मूल— **मिताक्षरार्थगंभीरा धीरान्तर्मोददायिनी ।**
**व्याकृतिस्तन्यते श्रीमत्कर्णानन्दप्रकाशिनी ।।3।।**

अर्थ— संक्षिप्त, अर्थ-गंभीर एवं धीर पुरुषों के हृदय को आनन्द देने वाली, कानों को सुख देने वाली "कर्णानन्द" की व्याख्या अब आरम्भ की जाती है । 3।

(आभास—श्रीराधा श्यामसुन्दर की केलि वर्णन का, चित्त में उत्साह लेकर प्रेरक श्रीहरिवंश महाप्रभु का ध्यान-वर्णन करते हुए, श्रीकृष्णचन्द्र प्रभु मंगलाचरण करते हैं।)

मूल-- स्फुरद्वदनपंकजः कनककूटदेहद्युतिः
प्रशस्तसुखसम्पदां निधिरपूर्वमानप्रदः।
सकृष्णवृषभानुजाचरणमाधुरीचुंचुरः
सदा मधुरवाक्पटुर्जयति साधु वैयासकिः ॥4॥

वैयासकिः व्यासनन्दनः श्रीहरिवंशाख्यः साधु यथा स्यात्तथा परोपकारित्वेनेत्यर्थः। जयति सर्वोत्कर्षेण वर्तते। कीदृशः स्फुरत् आनन्दोद्गारेण विकसत् वदनपङ्कजं मुखकमलं यस्य सः। पुनः कीदृशः, कनककूटः सुवर्णराशिस्तद्वद्गौरी देहद्युतिर्यस्य। पुनः कीदृशः प्रशस्तसुखसंपदाम् अबाधित-सुखसंपत्तीनां निधिरधिष्ठानं। पुनः कीदृशः अपूर्वः पूर्वमनाविर्भूतो यो मानः सत्कारस्तं परेभ्यः प्रकर्षेण स्वमाननैरपेक्ष्येण ददातीति सः पुनः कीदृशः। सकृष्णा कृष्णसहिता या वृषभानुजा श्रीराधा तस्याश्चरणमाधुर्यां चुंचुरो निपुणस्तदास्वादे व्यञ्जने च। यद्वा स इति वैयास-केर्विशेषणं ततो द्वंद्वः। पुनः कीदृशः सदा परापराधकालेऽपि मधुरायां तद्धितगर्भायां वाचि पटुर्दक्षः। 4।

अर्थ-- आनन्द के उल्लास में खिला हुआ मुख-कमल, सुवर्ण के पर्वत की सी गौर-पीत देह-कान्ति, अपरिमित सुख-सम्पत्तियों के अधिष्ठान, अभूतपूर्व मान-सत्कार के प्रदाता, श्री वृषभानु-नन्दिनी और नंद-नन्दन युगल के चरणारविन्द के माधुर्य में तन्मय, अपराध होने पर भी मधुरभाषी, श्री व्यासपुत्र श्रीहित हरिवंशजी की जय हो। 4।

मूल-- सान्द्रानन्दरसैकसारवपुषं माधुर्यरम्योदिताम्
सद्वक्त्रच्छविनिन्दितामलशरत्पूर्णेन्दुबिम्बामहम्।
भ्रू-भंगीजितकामकार्मुकलतां लावण्यलोलेक्षणाम्
वन्दे नन्दितनन्दसूनुमनिशं राधामसाधारणाम् ॥5॥

तदुपदिष्टदेवतां श्लोकद्वयेन नमस्करोति। राधामहं वंदे। कीदृशीं। असाधारणां निरुपमां। कुतः अनिशं निरंतरं नंदितो मोदितो नन्दसूनुर्यया तां। आनन्दविग्रह-स्यानंदकत्वादित्यर्थः। पुनः कीदृशीं। सांद्रो निविडो य आनंदः सुखरसस्तद्रूपमेकं विजातीयशून्यं सारं श्रेष्ठं वपुर्यस्यास्तां। पुनः कीदृशीं। माधुर्येण मिष्टत्वेन रम्यं उदितं वचनं यस्यास्तां पुनः कीदृशीं। सद्वक्त्रच्छव्या श्रेष्ठमुखदीप्त्या निंदितं तिरस्कृतं अमलं शरत्कालीनं पूर्णमखंडितं इंदुबिंबं चंद्रमंडलं यया ताम्। पुनः

**कीदृशीम् । भ्रू-भंगी भ्रूवक्रता तया जिता अनादृता कामस्य कार्म्मुकलता धनुर्लता यया ताम् । पुनः कीदृशीम् । लावण्येन लोले ईक्षणे लोचने यस्यास्ताम् ।** 5 ।

अर्थ —उन श्री व्यासनन्दन के द्वारा उपदिष्ट देवता (श्री राधा) को दो श्लोकों द्वारा नमस्कार करते हैं—

घनीभूत आनन्द रस के सार से जिनका श्रीअंग निर्मित हुआ है । जिनकी मधुर एवं कोमल वचनावली है, शरत्कालीन निर्मल पूर्ण चन्द्र को लज्जित करता हुआ जिनका सुन्दर मुखारविन्द है, पंचशर के चाप को जीतने वाली भ्रू-भंगी से सुशोभित जिनके परम लावण्यमय चंचल कटाक्ष हैं, जो श्रीनन्द-नन्दन को सुख देने वाली हैं, ऐसी असाधारणा श्रीराधा को नमस्कार है । 5 ।

मूल— **श्रीवृन्दाविपिनप्रतोलिषु नमत्संफुल्लवल्लीतति-**
**च्वम्भोजालिविघट्टनैः सुरभिणा वातेन संसेविते ।**
**कालिन्दीपुलिने विहारिणमथो राधैकजीवातुकं**
**वन्दे नन्दकिशोरमिन्दुवदनं स्निग्धाम्बुदाडम्बरम्** ।। 6 ।।

**अथो अनंतरं नंदकिशोरं वंदे । कीदृशं । कालिंदीपुलिने यमुनासैकते श्रीवृन्दाविपिनस्य प्रतोलिषु रथ्यासु उभयतो निकुंजावृतमार्गेषु विहारिणं क्रीडनशीलं । कीदृशीषु प्रतोलिषु नमंति संफुल्लानां वल्लीनां ततयः परम्परा यासु तासु । पुष्पाणां संफुल्लत्वं वल्लीषूपचरितं । कीदृशे कालिंदीपुलिने वातेन सम्यक् यथास्वं सेविते आश्रिते । कीदृशेन वातेन । अंभोजानां कमलानाम् आलिः पंक्तिस्तस्या विघट्टनं संपर्कस्तेन सुरभिणा सुगंधेन । कीदृशं नन्दकिशोरं । राधाया एकं केवलं जीवातुं जीवनौषधं । राधैव केवलं जीवातुर्यस्य वा तं । पुनः कीदृशम् । इंदुवत्प्रसादगुणयुक्तम् वदनं यस्य तम् । पुनः कीदृशम् । स्निग्धांबुदश्चिक्कणमेघस्तद्वदाडम्बर आटोपो यस्य आर्तिहरणश्यामलत्वादिसाधर्म्यात्तम् ।** 6 ।

अर्थ —श्रीवृन्दावन की उन कुंज गलियों में जिनके दोनों ओर पुष्पों के भार से झुकी हुई लता झूल रही है और श्रीयमुना के किनारे जहां कमलों के स्पर्श से सुरभित समीर बह रहा है, वहां विहार करने के अभिलाषी, तथा श्रीराधा ही है जीवन जिनकी, ऐसे चन्द्रवदन एवं स्निग्ध श्यामघटासदृश श्याम शरीर वाले नन्दकिशोर को मेरा नमन है । 6 ।

मूल— **सर्वाम्नायशिखावबोधविभवव्यावृत्ततर्कभ्रमे,**
**ज्ञातत्वंपदतत्पदार्थमनने केषांचिदन्तर्मनः ।**

ब्रह्मस्फूर्तिमुपैतु, नस्तु रविजारोधस्फुरद्वांजुल-
प्रासादे निवसंश्चकास्तु हृदये श्रीराधिकावल्लभः ।।7।।

एवं स्वेष्टं नत्वा स्वचित्तस्य व्यवस्थितिमाह । केषांचिद्योगिनाम् अंतर्मनः मनसि ब्रह्म शुद्धचैतन्यं स्फूर्ति प्रकाशमुपैतु गच्छतु । वृत्तिगोचरतया प्रकाशतामित्यर्थः । कीदृशे मनसि सर्वो य आम्नायो वेदस्तस्य शिरोभागः वेदांत इत्यर्थः । तस्य विबोधो ज्ञानं तस्य विभवः सामर्थ्यं तेन दृढवेदांतज्ञानेनेत्यर्थः । व्यावृत्तः निवृत्तस्तर्करूपो भ्रमो यस्मात्तस्मिन् । पुनः कीदृशे । ज्ञातमनुभूतं त्वंपदवाच्यं सोपाधि चैतन्यं जीवः तत्पदवाच्यं निरुपाधि चैतन्यं ब्रह्म तयोरर्थमनने उपाध्यंशनिषेधेनैक्यविचारो येन तत्र । ननु त्वं कथमुदासीन इव तत्राह । नस्तु अस्माकं तु हृदये श्रीराधिकावल्लभ-श्चकास्तु । स्फुरतु । किं कुर्वन् । रविजारोधसि यमुनातटे स्फुरति यो वांजुलः प्रासादो वेतसलतामन्दिरं तत्र निवसन् प्रीत्यावासं कुर्वन् । 7 ।

अर्थ —दृढ़ वेदान्त ज्ञान के द्वारा कुछ योगी अपने तर्कों का समाधान खोज लेते हैं । अथवा "त्वं" पद वाच्य उपाधि सहित चैतन्य जीव और "तत्" पद वाच्य निरुपाधि चैतन्य ब्रह्म के अर्थ का मनन करके चित्त में शुद्धचैतन्य ब्रह्म का प्रकाश अनुभव कर लेते हैं किन्तु हम तो यही चाहते हैं कि श्रीयमुना के निकट वैंत की लता से निर्मित मन्दिर में प्रेम सहित निवास करते हुए श्रीराधावल्लभलालजी का हृदय में स्फुरण सदैव होता रहे । 7 ।

मूल— वादीन्द्राः प्रतिवादिनोऽभिभवितुं तर्कादि संचिन्वताम्
येऽलंकाररसातिदक्षिणहृदस्ते काव्यमातन्वताम् ।
ये वेदान्तनितान्तदत्तमतयस्ते ब्रह्म सम्मन्वताम्
केचिद् ये तु वयं निकुंजरसिकक्रीडाविनोदाः स्फुटम् ।। 8 ।।

बहुविद्याः शास्त्रमवगाहंते तत्र स्ववैलक्षण्यमाह । ये वादीन्द्रा वादिराजास्ते तर्कादि तर्कशास्त्रादि संचिन्वतां अभ्यस्यन्तु । किं कर्तुं । प्रतिवादिनो विपक्षवादान् । अभिभवितुं पराजेतुं । ये चालंकाराः शाब्दिकार्थिकाः । तत्र शाब्दिका यमकादयः । आर्थिका उत्प्रेक्षादयः । रसाश्च शृंगारादयस्तेषु अतिदक्षिणं । यथावन्नियोजन-निपुणं हृत् मनो येषां ते काव्यं कवित्वम् आतन्वतां विस्तारयंतु । ये च वेदांते । नितांतं दत्ता अभिनिवेशिता मतिर्यैस्ते ब्रह्म संमन्वताम् । जानंतु । ये तु केचिद्वयं ते निकुंजेषु रसिकस्य रागवतः । श्रीकृष्णस्य क्रीडास्वेव विनोदो रमणं येषाम् ते इति स्फुटं प्रकटम् । 8 ।

अर्थ —वाद-विवाद-परायण विद्वान् प्रतिवादियों का मुंह बन्द करने के लिए तर्कादि शास्त्रों का अभ्यास करते रहें। आलंकारिक साहित्यिक व्यक्ति, भक्तिरस-विहीन काव्य रस का विस्तार करते रहें। बुद्धिवादी जन वेदान्त के द्वारा ब्रह्म-ज्ञान प्राप्त करते रहें। किन्तु हम लोग तो निकुंज के रसिक नन्दनन्दन के लीला-विनोद का ही भजन करते रहें। ४ ।

मूल—
कैश्चित्प्राक्तनकर्मभोगवशगे तर्कैरसूयाकुलै-
र्दोषो मय्यवरोप्यतामुत तथा मित्रैर्गुणग्राहिभिः ।
सद्धर्मार्जवबुद्धिसौष्ठवयुतं शीलं मम स्तूयतां-
चेतः श्रीवृषभानुजासहचरं निर्विघ्नमालम्बताम् ।।9।।

श्रेयो निर्धार्य तद्बाधकनिंदास्तुत्यनादरेण रतिं प्रार्थयते। कैश्चिदसूयाकुलैरसूयकै-र्मयि तर्कैः कृत्वा दोषोऽवरोप्यतां कल्प्यतां। ननु संधेरभावे कथं दोषारोपस्तत्राह। प्राक्तनेति। प्राक्तनं प्राचीनं यच्छुभाशुभं कर्म तस्य भोगस्तदुपसादितसुख-दुःखावाप्तिवशगे। तद्भोक्तरि नतु तद्विच्छेदकामुके पुरुषार्थान्तराभिनिवेशात्। उक्तं च श्रीभागवते—तत्तेऽनुकंपां सुसमीक्ष्यमाणो भुंजान एवात्मकृतं विपाकमिति। प्रारब्धभोग एव दोषारोपणसंधिरित्यर्थः। तथा मित्रैरुत मित्रैरपि मम शीलं स्तूयतां श्लाघ्यतां। कीदृशं। सन् श्रेष्ठो धर्म्मश्च आर्जवं मृदुत्वं च बुद्धिसौष्ठवं मतितैक्ष्ण्यं च तद्युतं। किन्तु मे चेतस्तु निर्विघ्नम् उभयत्र भयस्पृहारहितं यथा भवति तथा। श्रीवृषभानुजासहचरं श्रीराधानायकमालंबतां आश्रयतु। 9।

अर्थ —पूर्वजन्म कृत शुभ-अशुभ कर्मों के वशीभूत हम पर कुछ निंदक लोग ईर्ष्यामूलक तर्कों से दोषारोपण करें। अथवा श्रेष्ठ हित धर्म का आचरण करने से उत्पन्न हुए सरल और कोमल हमारे शील की शुभचिंतक लोग सराहना करें। किन्तु निन्दास्तुति से पृथक् रहकर मेरा मन तो श्रीवृषभानु-नन्दिनी के सहचर श्रीश्यामसुन्दर का ही निर्विघ्न आश्रय ग्रहण करता रहे। 9 ।

मूल—
केचिद्भावभिदातिरिक्तमतयो ब्रह्माप्नुयुः किं गतम्
श्रीमच्छ्रीपतिपादपद्मरसिकाः केचिद्भवेयुः शुभम् ।
उक्त्वालं भजतां यथारुचि विभुं भक्तोऽखिलः किन्तु नः
श्रीराधामृदुकंठकंदलभुजे कृष्णे मनो मज्जतु ।।10।।

निंदकस्तोतृनैरपेक्ष्यमुक्त्वेदानीं पुरुषार्थान्तरानुगतनैरपेक्ष्यमाह । केचिद्‌ब्रह्म आप्नुयुः प्राप्नुयुः । नः किं गतं का नो हानिः । भक्तिरसेन त एव वंचिता इति ध्वनितं । कीदृशः भवंति भावा देहादयस्तेषां भिदा भेदास्तदतिरिक्तास्तदतिक्रांता मतिर्येषां । यद्वा भिदयातिरिक्ता अतिशयेन रहिता मतिर्येषां अभेददर्शिन इत्यर्थः । केचिच्च । श्रीमतः श्रीपतेर्वैकुंठनाथस्य पादपद्मयो रसिका रागवंतो भवेयुः शुभं तदपि समीचीनं नास्माकं विवाद इयर्थः। उक्त्वालं भेदकथनेनालम्। यथारुचि रुच्यनुसारेण अखिलः सर्वो भक्तः विभुं तत्तदनुरूपानुग्रहसमर्थं श्रीकृष्णं भजतां सेवतां । किंतु नोऽस्माकं मनः कृष्णे मज्जतु मग्नं भवतु किंविशिष्टे । श्रीराधाया मृदु : कोमलः कंठ एव कंदलस्तत्र भुजो यस्य तस्मिन् । तत्रावलंबितहस्तपल्लवे इत्यर्थः । उक्त्वालमित्यत्र 'अलंखल्वोः प्रतिषेधे' इति सूत्रम् । 10 ।

अर्थ —देहाभिमान से रहित होकर भले ही कुछ लोग ब्रह्म को प्राप्त करें या लक्ष्मीपति के पादपद्मों में निरत रहें, वे सभी भक्त हैं और प्रभु उन पर उनकी रुचि के अनुसार कृपा भी करें। किन्तु हमारा मन यही चाहता है कि वह श्रीराधा के कोमल कंठ में गलबहियाँ दिये हुए श्रीकृष्ण में ही निमग्न रहे। 10 ।

मूल— यथेष्टमुक्ताः कविभिः सुवाचो
रसात्मिका यत्र रसैकरूपे ।
मृषा न किञ्चित्तमखण्डलील-
माभीरपल्लीविटमाश्रयामः ॥ 11 ॥

वयम् आभीरपल्ली गोपवाससंहतिस्तत्र विटं युवतिव्यसनिनमाश्रयामः सेवामहे । कीदृशं । यत्र यद्विषये कविभिर्यथेष्टं यादृगुत्थयुक्त्यनुसारेण उक्ताः कथिताः सुवाचः सुंदरगिरः किंचिन्न मृषा काश्चिन्नासत्याः । किंचिदित्यव्ययं । यद्वा किंचित् किमपि केनापि प्रकारेण न मृषा सर्वांगसत्या इत्यर्थः । यत् यत् स्वयुक्तिविजृंभितं विहारादिकं तैरुच्यते । तत्तत् श्रीकृष्णेनानुष्ठितमेवाभवदिति भावः । कीदृश्यः सुवाचः रसात्मिकाः शृंगारादिरसमय्यः । कीदृशे यत्र रसैकरूपे । सर्वरसैकविग्रहे । त्वयि सर्वरस इति श्रुतेः । पुनः कीदृशं । अखंडलीलं । अविच्छिन्नविहारं । घोष आभीरपल्ली स्यादित्यमरः । षिड्गः पल्लविको विट इति च । 11 ।

अर्थ —रस स्वरूप, नित्यविहारी की लीलाओं का भक्त कवियों ने जो शृंगार रसमयी वाणियों के द्वारा गान किया है, वह सर्वथा सत्य एवं यथार्थ है। अतएव मैं गोप-निवास व्रज के रसिक शेखर का आश्रय ग्रहण करता हूँ। 11 ।

मूल— राज्यं कुर्वन्तु कृष्ण प्रमथपति-
महीयोधातृगीर्वाणनाथाः
प्रह्लादंतां तु तेऽपि प्रचुररस-
निमग्ना ये विकुण्ठे निषण्णाः।
निश्चिन्तं वा शयीथास्त्वमपि
परमशुद्धानन्दवृन्दावनात्म-
क्रीडामाधुर्यलुब्धान् वनरसिक मया,
तान्योजयित्वा कथंचित् ।।12।।

तत्सेवानुरागसाधने साध्यभूता सत्संगतिरेवातः। सर्वतो मन आकृष्य तामेव प्रार्थयते। हे कृष्ण प्रमथपतिः शिवः महीयांश्चासौ धाता ब्रह्मा च गीर्वाणनाथ इन्द्रश्च ते राज्यं कुर्वन्तु स्वाधिकारवृत्तिं प्रतिपादयंतु नास्माकं किमपि प्रयोजन-मित्यर्थः। तु पुनस्तेऽपि प्रह्लादंतां मोदंतां। ते के ये वैकुण्ठे लोके निषण्णाः स्थिता सुनंदनंदादयः पार्षदाः कीदृशाः। प्रचुरो निर्विघ्नो यो रसो भगवदानंदस्तत्र निमग्ना आविष्टाः। ननु मय्येव कार्य्यगौरवं निक्षिप्यते तत्राह त्वमपि वा निश्चितं शयीथाः सुखं स्वपेः। मदार्त्तिव्यग्रो मा भवेति भावः। ननु मय्यपि सर्वथा किं नोदास्यते। यद्वेति पदं किंचित्साकांक्षं नियुज्यते। किंचित्त्वदधीनं प्रयोजनमस्तीत्याह। हे वनरसिक वृन्दावनविहारिन् तान्। प्रसिद्धान् परमः सर्वोत्कृष्टः शुद्धो दुःखाद्यसंभिन्नो य आनंदस्तद्रूपं यद्वृन्दावनं तत्र यात्मनः क्रीडा रासादिविलासास्तासां माधुर्ये लुब्धाँल्लोभिनस्तदाकृष्टचित्तानित्यर्थः। मया सह कथंचित्केनापि कारुण्यप्रकारेण तान् संयोजयित्वा मेलयित्वा एतावदेव त्वया विधेयं तेषां योगे यद्भावि तद्भावीति भावः। 12।

अर्थ —परम ऐकान्तिक रसिक-संग की आकांक्षा यहाँ व्यक्त की गई है। प्रमुख देवता जो शिव, ब्रह्मा, और इन्द्र हैं, अपने-अपने अधिकारों के अनुसार वे विनाश, उत्पत्ति और भोगादि कर्म करते रहें, आनन्दित होते रहें। हम उनका ध्यान अपनी ओर आकृष्ट नहीं करना चाहते। नित्य भगवत् पार्षद भी अखण्ड वैकुण्ठ-सुख का सेवन करते हुए भगवदानन्द में निमग्न रहें, यहाँ तक कि हे कृष्ण आप भी मेरे कष्ट से व्यग्र न होकर निश्चिन्त विराजें। किन्तु आप किसी भी प्रकार मुझे उन रसिकों का संग प्रदान करने की कृपा करें, जिनका मिलावट से रहित चित्त, सर्वोत्कृष्ट और विशुद्ध श्री वृन्दावन लीला-रस-माधुर्य का ही एकमात्र लोभी बन चुका है। 12।

मूल— ये संसारसमुद्रविप्लुतजगन्निस्तारपट्वङ्घ्रयः
शुद्धाधोक्षजपादभक्तिसरसीहंसास्तु तेभ्यो नमः।
प्रार्थ्यं किन्त्विदमेव यन्मधुरतासाराब्धिवृन्दाटवी–
सुत्रामानुकथारसैः पुलकिनस्तैः स्यामहं नाथवान् ॥13॥

सर्वभक्तानुकूल्येनैव तत्संगतिमेव पुनः प्रार्थयते। ये शुद्धा चासावधोक्षजपादभक्तिः सैव सरसी तत्र हंसा हंसवद्रममाणास्तेभ्यो नमः। कीदृशाः। संसारो जन्ममरणादिः स एव समुद्रः दुस्तरत्वात्तस्मिन् विप्लुतं ब्रुडितं यज्जगत्। जगति स्थितो जनः। मंचाः क्रोशंतीतिवदुपचारः। तस्य निस्तार उद्धरणं तत्र पटवो दक्षा अंघ्रयो येषां ते। किंतु तत्प्रसादेऽपि प्रार्थ्यमिदमेव। किं तत् यत् मधुरताया माधुर्यस्य सारः पराकाष्ठा तस्याब्धिर्या वृंदाटवी तस्या सुत्रामा इंद्रः श्रीकृष्णस्तस्य अनु अनुक्षणं कथ्यमाना ये कथारसास्तैर्ये पुलकिनः सरोमांचास्तैरहं नाथवान् परतंत्रः स्यां तदनुवर्त्ती भवेयमिति तत्। 13।

अर्थ —सब भक्तों की अनुकूलता से उनके सत्संग की पुनः कामना करते हैं— शुद्ध भगवद्भक्ति-सरोवर के हंस उन भक्तजनों के श्रीचरणों में मैं प्रणाम करता हूँ जो संसार-सागर में डूबते हुए जीवों को तारने में कुशल हैं। किन्तु मेरी प्रार्थनीय अभिलाषा यही है कि—माधुर्य रस-सार-समुद्र श्रीवृन्दावन के इन्द्र (श्रीलालजी) की प्रतिक्षण रसकथा के गान करने से जो निरन्तर पुलकित हो रहे हैं, ऐसे रसिकजन मुझे सनाथ करें। 13।

मूल— रक्ष निर्जनवने गृहेऽथवा,
देहि जन्म सुकुलेऽकुलेपि वा।
यच्छ कीर्तिमथवापकीर्तनं,
नैव विस्मृतिमुपेहि मे विभो ॥14॥

नन्वाश्रमादि साधनं विहाय कुतस्तदनुवर्त्तित्वमेवापेक्ष्यते निरंतरं। त्वत्स्मृत्याशयेनाह रक्षेति। हे विभो निर्जनवने लोकसंचारशून्यविपिने मां रक्ष वासय अथवा परिजनादिसंकुले गृहे रक्ष। सुकुले शोभने ब्राह्मणादिकुले जन्म देहि अकुले तद्विरुद्धचाण्डालादिकुलेऽपि वा। किं च लोके कीर्तिं यशो यच्छ देहि अथवा अपकीर्तिं अपयशो यच्छ। ननु सर्वत्र ममाभिलाषानभिलाषौ तर्हि कुत्राभिलाषस्तत्राह। मे विस्मृतिं त्वं नैव उपेहि। नैव याहि। यथा त्वामविच्छेदेन स्मरेयम्। तथा सत्संगत्या संपादयेत्यर्थः। 14।

अर्थ —हे प्रभो ! मुझे चाहे घोर जंगल में रखिए अथवा भरे-पूरे घर में, उच्च कुल में जन्म दीजिए अथवा नीच कुल में, संसार में मुझे यशस्वी बनाइए अथवा निन्दित, बस कृपाकर ऐसे सत्संग में रखिए जिससे आपकी विस्मृति न हो। 14।

मूल— **किन्नु देयमखिलार्थशेवधे,**
**किन्नु नेयमपि वा परात्मनः ।**
**चन्द्रचन्द्रकपरागशीतला,**
**त्वत्कथा श्रुतिमलं विगाहताम् ।। 15 ।।**

**ननु किंचिद्दानादानतः परिचयेन स्मृतिः स्यात् । किं तत्संगत्या तत्राह । किं नु देयमिति । हे अखिलार्थशेवधे समस्तपुरुषार्थनिधे तुभ्यं देयं दातव्यं किंनु न किमपि, तवैव सर्वार्थनिधित्वात् । दानतः परिचितिं निराकृत्यादानतोऽपि निराकरोति किं नु नेयमिति । परात्मनः परमात्मनस्त्वत्तो नेयमपि वा किं न किमपि । सर्वस्यैव पदार्थस्य परमात्मसुखौपयिकत्वात् । तर्हि कथं स्मृतिस्तत्राह चंद्रचंद्रकेति । त्वत्कथा श्रुतिं कर्णम् अलं अत्यर्थं विगाहतां। धारावाहिकवृत्त्या कर्णे प्रविशत्वित्यर्थः। कीदृशी चंद्रश्च चंद्रकः कर्पूरस्तस्य परागश्च तद्वच्छीतला सकलतापोपशमनीत्यर्थः । अतः सत्संगत्यैव कथाश्रवणेनाविच्छेदेन त्वत्स्मृतिर्नान्यथेति तात्पर्यम् । कर्पूरः स्फाटिकश्चंद्र इति वचनम्। 15।**

अर्थ —हे समस्त पुरुषार्थों के अधिष्ठान ! मैं आपको भला क्या दे सकता हूँ। परमात्मा-रूप आपसे ही सम्पूर्ण सुखादि प्राप्त होते हैं अतः कोई ऐहिक पदार्थ भी मैं आपसे नहीं चाहता। मेरी तो एकमात्र यही अभिलाषा है कि चन्द्रमा, कर्पूर और पराग के सदृश शीतल आपकी कथा सदैव श्रवण-गोचर होती रहे। 15 ।

मूल— **स्फुटतृष्णागरलाधिरूढमोहो**
**विषयाशीविषदष्टमानसोऽपि ।**
**अहमात्मानमवैमि तेऽभिधाना-**
**न्मनुतः श्रीगुरुणा हरेऽनुगीतात् ।।16।।**

**किं च। विषयाभिनिविष्टमनसस्तावदात्मन एव न स्मृतिः कुतः परात्मनस्तव। यदि तु सत्संगेन देहाद्यभिनिवेशनिरासेनात्मपरिचयस्तदा सुखेनैव तव स्मृतिरिति स्वानुभवेनाह । हे हरे ! अहमात्मानं देहादिभिन्नं नित्यसुखं चिदात्मकं त्व-**

दंशभूतमवैमि जानामि। नन्वात्मज्ञाने किमाश्चर्यं तत्राह। कीदृशोऽपि। विषय एव आशीविषः सर्पस्तेन दष्टं मानसं यस्य विषय-वासनाग्रथितहृदयोऽपि। ननु सर्प-दष्टस्यापि दष्टोऽहमिति ज्ञानं भवत्येव तत्राह। स्फुटा प्रकटा या तृष्णा तदेव गरलं विषं तेनाधिरूढः प्रवृद्धो मोहः। अविवेको यस्य। अतो नष्टविवेकस्य न तथात्वं। तर्हि कथं जानासि तत्राह। मनुतः मंत्रात्। कीदृशात्तवाभिधानात्। नामरूपात् पुनः कीदृशात् श्रीगुरुणानुगीतात् उच्चरितात्। आचार्येणैवोक्तमंत्रस्यार्थसाधक-त्वात्। सर्पदष्टोऽपि विषाक्रमणप्राप्तमूर्च्छो गारुडिकोक्तमंत्रबलात् विषनिरासेन लुप्तमूर्च्छः सन्नात्मज्ञो भवतीतिच्छायार्थः। 16।

अर्थ—हे प्रभो! बढ़ी हुई तृष्णा के जहर से अत्यन्त मोहित और विषय-रूपी सर्प के दंशन से विषाक्त मानस होने पर भी श्रीगुरु-प्रदत्त आपके नाम-मन्त्र के प्रभाव से मैं देहादिभिन्न नित्य-सुख-स्वरूप, चिदात्मक आपका ही अंश हूँ। इस प्रकार अपने वास्तविक स्वरूप को जानता हूँ। 16।

मूल—त्यक्तान्यवृत्ति भवदङ्घ्रिरतेषु कृष्ण!
नो भाति यन्निजमलं करुणत्वमङ्ग।
तन्मादृशेषु पतितेषु विराजय त्वं,
गूढं तवापि हितमेतदहं ब्रवीमि॥ 17॥

एवं श्रीगुरुरूपभगवदनुग्रहादुत्पन्नविवेकेन भजनप्रवृत्तस्य भगवत्कृपाकामुकतैव प्रादुर्भवतीति द्योतयन् स्नेहवशात् तद्धितोपदेशव्याजेनापि कृपां वांछति। अंग हे कृष्ण एतत् वक्ष्यमाणं गूढं गुह्यं तवापि हितमहं ब्रवीमि। न तु ममैवेत्यर्थः। किं तत् यन्निजं करुणत्वं तव कारुण्यं त्यक्ता अन्या ऐहिक्यामुष्मिकी च वृत्तिर्यत्र तत्तथा भवदंघ्रिरतेषु त्वच्चरणानुरक्तेषु अलं अत्यर्थं न भाति न शोभते। तेषां स्वकृत्य-पूर्णत्वात्। तत्कारुण्यं मादृशेषु पतितेषु स्वकृत्यदरिद्रेषु विराजय शोभय। शिष्टवचनं च। "वितायमाना विद्वद्भिः सर्वत्रान्येषु ये गुणाः। शोभंतेऽनन्यगतिका कृपा दीने विराजते" इति। 17।

अर्थ—हे कृष्ण! सम्पूर्ण लौकिक और पारलौकिक प्रवृत्तियों को त्यागकर जो आपके चरण-कमलों में स्वतः निरत हैं, ऐसे समर्थ महापुरुषों पर आपकी करुणा उस प्रकार शोभित नहीं होती जिस प्रकार मुझ जैसे पतित पर शोभित होती है। अतः मेरी प्रार्थना है कि "कृपा दीने विराजते" "करुणा दीन पर करनी चाहिये"

के अनुसार कृपा मुझ दीन पर करो। इस कार्य से आपका और मेरा दोनों का ही हित होगा। आपके द्वारा शिष्ट आचरण होगा और मेरा उद्धार। 17।

मूल— **येषां त्वय्यखिलोत्तमोत्तममतिर्न स्याद्गुरूपासना–**
**त्तेषां का निजकर्मपद्धतियुजां भक्तेः कथाशापि न।**
**लोकेऽपीत्थमिदं यथातिशिशवस्तद्वृत्तिभेदा बुधा,**
**अन्तिस्थं कनकं त्यजन्ति खलवत्तज्ज्ञास्तु तत्कांक्षिणः ।।18।।**

ननु यदि सर्ववृत्तिपरित्यागेन विवेकिजनैकसेव्यचरणो दीनानुकंपी चाहम्। तर्हि सर्वे मामेव किमिति न सेवन्ते तत्राह। हे अखिलोत्तम सर्वश्रेष्ठ येषां गुरूपासन-तस्त्वयि विषये उत्तममतिः परमपुरुषार्थबुद्धिर्न स्यात्। गुरूपसत्तिं विना पुरुषार्थ-बुद्धेरभावात् आचार्यवान् पुरुषो वेदेति श्रुतेः। तेषां भक्तेर्भजनस्य का कथा का वार्ता यत आशापि न कदाचित् किं मे भविष्यतीति वांच्छामात्रमपि न भवेत्। कीदृशानां निजानां स्वीयानां कर्मणां या पद्धतिः पदवी पुनः पुनरनुष्ठानपरंपरा तया युज्यंते युक्ता भवंति ये तेषां संस्कारवशात्तत्रैवाविष्टानामित्यर्थः। एतदेव दृष्टांतेन विवृणोति। लोकेऽपीति। लोकेऽपि लोकव्यवहारेऽपि इदम् उक्तवृत्तं। इत्थमेव ईदृशमेव। कथमित्यत आह। यथातिशिशवोऽतिबाला अंतिस्थमपि कनकं निकटस्थमपि सुवर्णं खलवत्। यंत्रोद्धृततिलादिकिट्टवत्त्यजन्ति उपेक्ष्यंते ननु खलवत्कथं कनकत्यागो युज्यते साम्यदर्शनादित्याह। कीदृशाः। तद्वृत्तिभेदा बुधास्तस्य कनकस्य या वृत्ति-र्भोगसंपादकत्वेन वर्त्तनं सैव भेदो विशेषस्तस्याः वा तां न बुध्यन्त इति तथा ते तु पुनः ये तज्ज्ञाः कनकवेदिनस्ते यद्यपि न लभंते तथापि तत्कांक्षिणः सुवर्णवांछाशीला भवंतीति तथा। अतोऽतर्क्यहेतुत्वदनुकंपासंपादितश्रीगुरूपसत्तिं विना कर्मभि-र्भ्राम्यमाणानां वस्तुपरिचयाभावान्न भजनप्रवृत्तिरिति तात्पर्यम्। 18।

अर्थ —हे सर्वश्रेष्ठ ! अपने-अपने गृहकार्यों में लगे रहने के अभ्यासी जनों से भजन की आशा ही व्यर्थ है। वे लोग तो गुरु-शरणागति के द्वारा आपको प्राप्त करना ही परम पुरुषार्थ है—यह नहीं जान पाते हैं। संसार में यही देखा जाता है कि दोनों के भेद को न जानने वाले अज्ञ बालक पीली खली के वर्ण जैसे पास में रखे सुवर्ण को खली मानकर छोड़ देते हैं। किन्तु स्वर्ण को पहिचानने वाले उसकी आकांक्षा करते रहते हैं। 18।

मूल— **यदपि निगमदिष्टस्वीयकर्माधिकारे,**
**विषयमतिरकल्पः स्वैरमुन्मार्गगामी।**

तदपि हरिपदाब्जन्यस्तसर्वोत्तमाशा-
नतिवदति तदर्थं हा ! जनो भूरिमोहः ॥19॥

लोकस्य भजने न प्रवृत्तिरिति किं वक्तव्यं यतोऽन्यानपि भक्तानसहमानो निष्प्रयोजनं निंदंस्तदपराधादधो यातीति सानुकंपमाक्रोशन्निवाह। हा कष्टं जनो लोको भूरिमोहः। बहुतराविवेकः। कथमित्यत आह। यदपि यद्यपि निगमेन वेदेन दिष्ट उक्तः स्वीयः स्वानुष्ठेयो यः कर्माधिकारस्तत्राकल्पः कर्तुमसमर्थः सन्। स्वैरं यथेष्टं यथा स्यात् तथा उन्मार्गगामी उच्छृंखलमार्गगमनशीलो भवति। कुतः विषयेष्वेव मतिस्तत्त्वबुद्धिर्यस्य सः। तदपि तथापि। तदर्थं कर्माधिकारार्थं हरिपदाब्जयोरेव न्यस्ता सर्मपिता सर्वोत्तमाशा सर्वाधिकवाञ्छा यैस्तान् भक्तान् अतिवदति निंदति स्वयं शुद्धविषयरसेन विहितमनादृत्य तत्पक्षव्याजादासुरस्वभावेन हरिभक्तिमेवासहमानो भक्तान्निन्दतीति तात्पर्य्यम्। 19।

अर्थ —अहा, उन लोगों के विपुल मोह को देखकर कष्ट होता है जो स्वयं विषय-भोगों में फंसे रहने के कारण अपने वेदोक्त कर्मों का पालन नहीं कर पाते और उच्छृंखल जीवन व्यतीत करते हैं किन्तु वे उन भक्तों की निन्दा करते रहते हैं, जिन्होंने श्रीहरि के चरणकमलों में ही अपनी सर्वोत्तम अभिलाषा को लगा रखा है और जो वैदिक कर्मों के पालन करने में दत्तचित्त नहीं होते। 19।

मूल— किं करोमि निजवर्णवैभवं,
नन्दतादपि स आश्रमश्चिरम्।
पामरैरपि गृहीतमानसं
भक्तितस्तमहमाश्रये हरिम् ॥20॥

नन्विंद्रियारामैर्विहितमतिक्रम्यतामेवं वेदिभिर्भवादृशैरनुष्ठीयतां। तन्निंदासंधिच्छेदनायेति चेदत आह अहं निजवर्णवैभवं निजः स्वीयो यो वर्णो ब्राह्मणत्वादिर्देहाद्यभिनिवेशेन ममकारास्पदत्वात्। तस्य वैभवं सांगानुशीलनेन सामर्थ्यं किं करोमि तेन किं साधयामीत्यर्थः। अभिलाषस्य पुरुषार्थानुपयोगात् स प्रसिद्धः आश्रमः स्वगार्हस्थ्यादिरूपश्चतुर्विधः। नंदतात्। समृद्धयतु स्वगोचरेषु तिष्ठत्वित्यर्थः। ननु द्वयोः परित्यागे किं करिष्यसि तताह। हरिमाश्रये। आराधयामि ननु तदाश्रयणमपि तदपेक्षमेव किं न स्यात्तत्राह। कीदृशं। पामरैरपि वर्णादिरहितैर्नीचैरपि भक्तितः भक्त्यैव गृहीतमानसं वशीकृतचित्तं। भक्त्याहमेकया ग्राह्य इति भगवद्वचनं सदाचारेऽन्वयव्यतिरेकाभ्यां सावसरं तथात्वदर्शनं च। 20।

अर्थ —मैं अपने उच्च वर्ण के वैभव को लेकर क्या करूँ ? इसी प्रकार गार्हस्थ्य आदि आश्रमों में श्रद्धा रखने वाले अपने क्षेत्र में समृद्धि लाभ करें, इससे मुझे क्या प्रयोजन ? मैंने तो भक्तिपूर्वक उन श्रीहरि का आश्रय ग्रहण किया है जिनके मन को वर्णाश्रम-विहीन पामर जन भी अपने वश में कर लेते हैं। 20।

मूल— **श्रद्धैव नान्यत्र करोमि किं वा,**
**श्रद्धां विना कर्म फलं न सूते ।**
**श्रद्धा तु जाता हरिभक्तिभावे,**
**लोकः सदा रुष्यतु तुष्यताद्वा ॥21॥**

**ननु हरिरप्याश्रीयतां विहितमप्यनुष्ठीयताम् तत्राह श्रद्धेति । अन्यत्र हर्याश्रयणादन्यस्मिन्ननुष्ठेये श्रद्धैव नास्ति करोमि वा किं श्रद्धानंतरानुष्ठानसंभवात् । ननु शिष्टाचारत्वेन विधेयं तत्राह । श्रद्धां विनानुष्ठितमपि कर्म फलं न सूते न जनयति । ननु यत्नैश्च श्रद्धोत्पत्तिर्विधेयेति चेदत आह । श्रद्धा तु हरिभक्तिभावे हरिभजनभावनायां जाता उत्पन्ना नान्यत्रापि संपादयितुं शक्येति भावः । नन्वेवं लोको नानुरज्येत तत्राह । लोक इति । लोको जनः सदा रुष्यतु रुष्टो भवतु तुष्यतात् तुष्टो भवतु वा । तस्य रोषे तोषे च न मे हानिलाभावित्यर्थः । 21 ।**

अर्थ —श्री हरि का आश्रय ग्रहण करते हुए भी वेदोक्त कर्मों का पालन किया जा सकता है, इस पूर्व-पक्ष का उत्तर देते हुए कहते हैं—

वेद-विहित कर्मों के अनुष्ठान में मेरी कोई श्रद्धा नहीं रह गई है। बिना श्रद्धा जो कर्म किया जाता है वह निष्फल होता है। मेरी प्रीति तो श्रीजी के भक्ति-भाव में है, चाहे संसार इससे प्रसन्न हो अथवा रुष्ट। 21।

मूल— **अहं त्वदीयो यदिति व्रतं मे**
**त्वं तुष्य मा तुष्य गतिस्त्वमेव ।**
**भर्तर्यतुष्टेऽपि हरे न लिप्सेत्,**
**साध्वीयसी या युवतिस्तदन्यम् ॥22॥**

**किं च त्वत्प्रसादाप्रसादयोरपि नाहमन्यादृशः किमुत लोकस्येत्याह । हे हरे त्वं तुष्य तुष्टो भव मा तुष्य वा प्रभुत्वात् । यथा कथंचिद्व्यवहर मम तु पतिस्त्वमेव । कुतः यत् यतः मे अहं त्वदीय इति व्रतं धर्मः । न तु त्वत्प्रसादविनिमयाग्रहे प्रयोजन-**

मित्यर्थः । तत्र दृष्टांतः भर्तरीति । भर्तरि असंतुष्टेऽपि या साध्वीयसी अतिसाध्वी युवतिः सा तदन्यं भर्त्तुरितरं न लिप्सेत् नेच्छेत् । 22 ।

अर्थ —सच तो यह है कि आपकी प्रसन्नता और अप्रसन्नता दोनों ही अवस्था में "मैं आपका ही हूँ" उसी प्रकार जिस प्रकार पतिव्रता नारी, अपने स्वामी के रोष-तोष का विचार न करते हुए सदैव उसी की बनी रहती है, अन्य में अपने मन को नहीं लगाती । 22 ।

मूल— त्वत्सेवायै बद्धतृष्णोऽच्युताहं,
तत्पात्रत्वं देहि नो वा चिराद्वा ।
वाञ्छाम्यन्यन्नैव जन्मायुतेऽपि,
पीयूषार्थी कः पिबेज्ज्ञो विषाणि ।।23।।

ननु पतिरहमेवेति भवतु नाम विहिताप्रवृत्तौ को हेतुरित्याशंक्य त्वत्सेवारुचिरेवेत्याशयेनाह । हे अच्युत नित्यस्वरूप त्वत्सेवायै तव सेवनाय बद्धतृष्णो ग्रथिताभिलाषोऽहं अन्यत् सेवेतरकर्म्म जन्मायुतेऽपि जन्मनां सहस्रदशकेऽपि उपलक्षणं अगणितजन्मस्वपीत्यर्थः । नैव वाञ्छामि किमुत न करोमीति । ननु तव सेवापात्रता तावद्विधीयतां तत्राह । तदिति तत्पात्रत्वं सेवापात्रत्वं देहि नो वा देहि चिराद्बहुजन्मकाले वा देहि । पक्षत्रयेऽपि नान्यप्रवृत्तिरित्यर्थः । ननु पक्षद्वये भवतु तथा अदाने तु कथं नेच्छति तत्राह । पीयूषेति पीयूषार्थी अमृतेच्छः तदलाभेऽपि विषाणि कः पिबेत् न कोऽपि कीदृशः यस्तयोर्वैजात्यज्ञाता ।23।

अर्थ —हे अच्युत ! मेरे मन में सदैव आपकी सेवा करने की ही तृष्णा बनी रहती है, फिर आप अपनी सेवापात्रता मुझे प्रदान करें, न करें अथवा विलम्ब से करें । जैसे अमृत को पहचानने वाला उसके न मिलने पर विष का सेवन नहीं कर सकता, वैसे ही करोड़ों जन्मो में भी मेरे मन में आपके सेवन के अतिरिक्त अन्य कोई इच्छा उत्पन्न नहीं होगी । 23 ।

मूल— यद्भुक्तशेषादुपवासवृद्धि-
र्यत्पादतोयाद् बहुतीर्थलाभः ।
यत्कीर्तनात्सर्वशुभार्थसिद्धि-
स्तं कृष्णचन्द्रं प्रणमामि नित्यम् ।।24।।

श्रीकृष्णसेवैव परमपुरुषार्थ इत्यनुरागस्तु दुर्लभः। फलकामनयापि नान्यदनुष्ठेयं तत्रैव सर्वार्थसिद्धेरित्याशयेन प्रणमति। तं श्रीकृष्णचन्द्रं नित्यं प्रणमामि। कीदृशं यद्भुक्तशेषात् यस्योच्छिष्टात्। उपवासानामेकादश्यादिव्रतानां वृद्धिर्वर्द्धनं अपरिमितव्रतफलं भवतीत्यर्थः। तथा च पाद्मे गौरीं प्रति रुद्रवचनं "एकादशीसहस्रेण द्वादशीनां शतेन च। यत्फलं लभते गौरि विष्णोर्नैवेद्यभक्षणात्।" गरुडपुराणे च "षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्तितम्। विष्णोर्नैवेद्यशिष्टेन तत्फलं भुञ्जतां कलौ।" पाद्मे च "व्रतोपवासनियमैः कृच्छ्रचांद्रायणादिभिः। यज्ञैर्नानाविधैः पुण्यैर्जपहोमादिभिस्तथा। तुलापुरुषदानाद्यैः कोटिब्राह्मणभोजनैः। सम्यगाचरितैर्विप्रा यत्फलं लभते नरः। तत्फलं समवाप्नोति विष्णोर्नैवेद्यभक्षणे।" पुनः कीदृशम्। यत्पादतोयाद्यस्य चरणोदकात्-बहुतीर्थलाभः बहूनां तीर्थानां लाभः प्राप्तिस्तं। तथा च स्कांदे "शिरस्यातिष्ठते येषां नित्यं पादोदकं हरेः। किं करिष्यंति ते लोके तीर्थकोटिमनोरथैः।" स्मृतिश्च "स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः। शालग्रामशिलातोयैर्योभिषेकं समाचरेत्। गंगा गोदावरी रेवा नद्यो मुक्तिप्रदास्तु याः। निवसंति च तीर्थानि शालग्रामशिलाजले।" अत्र चरणोदकमात्रमहिमोक्तः नतु विग्रहभेदविवक्षेष्टा। पुनः कीदृशं यत्कीर्त्तनात् सर्वेषां शुभानां पुण्यानामर्थसिद्धिः फलसिद्धिस्तं। यत्कीर्त्तनमेव सर्वपुण्यफलमित्यर्थः। श्रीभागवते देवहूतिवचनं—तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणंति ये ते। तत्रैव सूतवचनम्—इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः। अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनमिति। 24।

अर्थ—जिनका प्रसाद (भुक्तशेष नैवेद्य) ग्रहण करने से एकादशी आदि व्रत-उपवासों के फल में अपरिमित वृद्धि होती है (जैसा कि पद्मपुराण में लिखा है—"एकादशी सहस्रेण-इत्यादि" अर्थात् हजार एकादशी व्रतों का और सौ द्वादशी के उपवासों का फल एक बार प्रभु के प्रसाद को पा लेने में समाया हुआ है), जिनके चरणामृत पान कर लेने पर समस्त तीर्थों की प्राप्ति हो जाती है और जिनके (नाम, रूप, लीला और धाम के) कीर्तन से समस्त शुभ कर्मों की सिद्धि होती है ऐसे श्रीकृष्णचन्द्र की मैं नित्य वन्दना करता हूँ। 24।

मूल—
शृण्वन्तु सर्वे पितरः सदेवा,
मत्तो निराशा बलितो भवन्तु।
जातोऽभिलाषी तु बलौ मुकुन्दो,
हानिः क्व गृह्णीत जनान्तरेभ्यः॥ 25॥

नन्वेवं सत्यपि देवादयः स्वस्वनियतबलिमपेक्षिष्यन्ते इत्याशंक्य तान् प्रत्याह।

हे पितरः पितृगणाः सदेवाः देवैः सहिता भवंतः सर्वे शृण्वन्तु किमित्यत आह। मत्तः सकाशात् बलितः बलेर्निराशा भवन्तु कुतः। अस्मद्देये तु बलौ करे श्रीमुकुन्दोऽभिलाषी। अभिलाषवान् जातो बभूव तस्मिन्नेवास्मद्देवत्वविधानात्। अतो यूयं जनान्तरेभ्यः। स्वानुरक्तजनेभ्यो बलिं गृह्णीत एवं सति क्व हानिः न क्वापि भवतां न बलेर्विप्लवो न चास्माकं देवाधिदेवाराधने प्रत्यवायशंकेत्यर्थः। अन्यथा तत्र बलौ कामनया भवन्तो दाने च वयमपराधिनो भवामः। यथा चक्रवर्तिबलौ कामनया मण्डलेश्वरा दंड्या भवन्ति दातारश्चेति तात्पर्य्यम्। 25।

अर्थ—हे देवताओं सहित सब पितृ-गण! भली-भाँति सुन लें कि आप लोगों को बलि के लिए मुझसे निराश हो जाना चाहिये। मेरी बलि के अभिलाषी तो श्रीमुकुन्द हो गए हैं। आप लोग यदि अपने अन्दर श्रद्धा रखने वाले जनों से यह बलि ग्रहण कर लें तो क्या हानि है? इस उपाय से आपकी तो बलि का विच्छेद न होगा और मेरे भगवदाराधन में कोई विघ्न उपस्थित न होगा। 25।

मूल—

नो किं समंजसमिहेत्यसमंजसं वा,
वेदेति गूढसरणौ कलयामि किंचित्।
एतेन सर्वकलनं भवतां न वा यद्,
गोविन्दपादभजनादितरं न जाने॥ 26॥

नन्वेवं श्रुत्युक्तबाधः स्यादित्याग्रहिणो मूढान्निर्णीतार्थेनैव श्रुतिं प्रमाणयन्मूकयति। इह वेदे किं समंजसं विधिः। असमंजसं निषेधः इति किंचिन्नो कलयामि न विचारयामि। तत्र हेतुत्वेन विशेषणं। कीदृशे। अतिगूढा लोकार्थतर्कभूतवादैर्दुर्ज्ञेया सरणिर्मार्गो यस्य तस्मिन्। तथैकादशे श्रीभगवद्वाक्यं—शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयं। अनन्तपारं गंभीरं दुर्विगाह्यं समुद्रवत्। अन्यच्च। किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्। इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चनेति। किंतु एतेनैव विचारेण सर्वकलनम् सर्वश्रुतितात्पर्य्यविचारो भवतात् भवतु न वा। केन। गोविन्दपादभजनात् इतरत् अन्यच्छ्रेयोऽहं न जाने इति यत् न वेति निर्णीतदार्ढ्यादुक्तं। वेदस्तु तत्पर एव। तत्रैव भगवद्वाक्यं—मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहं। एतावान् सर्ववेदार्थः शब्द आस्थाय माम् भिदाम्। मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदतीति। 26।

अर्थ—वेद में क्या विधि है क्या निषेध है—यह जान लेना अत्यन्त मुश्किल है, जैसा कि श्रीमद्भागवत में कहा है—"शब्दब्रह्म सुदुर्बोधम्" इत्यादि "प्राण, इन्द्रिय तथा मनोमय होने के कारण, शब्दब्रह्मस्वरूप वेद, अत्यन्त दुर्बोध हैं" आदि। इसलिए मैं विधि-निषेध को छोड़कर वेदार्थ-सार का विचार करते हुए यही जान

पाया हूँ कि गोविन्द के श्रीचरणों का सेवन करने के अतिरिक्त अन्य कुछ भी श्रेय नहीं है। समस्त श्रुतियों (वेदों) का तात्पर्य इसी विचार में सम्मिलित है। 26।

मूल— निन्दापरा बन्धुवरा बुधानां,
तत्त्वेन जानन्तु त एव धीराः।
जातं मलं दैववशाद्यतस्ते,
स्वेनापकर्षन्ति रसेन्द्रियेण ॥ 27 ॥

नन्वेवमजानन्तो निन्दिष्यन्ति का तत्र क्षतिः प्रत्युतोपकार एवेत्याशयेनाह। निंदापरा निंदकाः। बुधानां तादृशं धर्मं जानतां बंधुवराः बंधुभ्योऽपि श्रेष्ठा इति धीरा निंदनेऽप्यविकृतचित्तास्त एव बुधास्तत्त्वेन वस्तुविचाराञ्जानन्तु ननु किं तत्त्वं तत्राह यतो दैववशात्। देवेच्छातो जातमपि मलं पापं ते निंदकाः। स्वेन आत्मीयेन रसेन्द्रियेण जिह्वया अपकर्षन्ति संमार्जयन्ति। नहि बंधुर्मलं स्पृशति। मात्रादिश्चेत् स्पृशति। तर्हि कर्परा्द्यंतरितकराभ्यां-अतो दूरमंतरमिति भावः। उक्तं च हरिवल्लभसुधोदये—लोके गरीयसी माता मातृतोऽप्यधिकः खलः। माता मलं तु हस्ताभ्यां खलः क्षालति जिह्वयेति। अतस्तेऽप्युपकारिण एवेति तात्पर्य्यम्। 27।

अर्थ —जो वेदार्थ-सार का विचार नहीं करते और मात्र निन्दा-स्तुति में प्रवृत्त रहते हैं, धीर-पुरुष, निन्दकों की इस प्रवृत्ति से विचलित न होकर, तात्त्विक दृष्टि से उनको अपने श्रेष्ठ बन्धु की ही भाँति प्रेम करते हैं, क्योंकि कर्म-विपाक से यदि कभी कोई पाप-कर्म इस देह से बन जाता है तो उसे ये निन्दक लोग अपनी जिह्वा से धो डालते हैं, तथा धीरपुरुष इनके द्वारा आत्म-दर्शन करने में समर्थ होते हैं। 27।

मूल— भो! निन्दका! भो! बहुतर्कवादाः,
शृण्वन्त्वसूयारसिकास्तथेदम्।
शूरा भवन्तः स्वरसे वयं तु,
स्वे कृष्ण-भावे किमु कातराः स्मः ॥ 28 ॥

किं च प्रकारांतरेणाप्युपकारिण एवेति दृष्टान्तेनैव प्रत्याह। भो निंदकाः निंदनशीलाः भो बहुतर्कवादाः बहुभिस्तर्कैरेव वादो वदनं येषां ते तार्किका इत्यर्थः। तथा हे असूयारसिकाः गुणेषु दोषाविष्करणमसूया तत्र रसिका रागवन्तः सर्वे इदं शृण्वन्तु। किमित्यत आह। स्वरसे स्वीये निंदादिरसे तुच्छेऽपि भवंतः शूराः दृढाः निर्लज्जत्वेन

वर्त्तमाना इत्यर्थः । वयं तु स्वे स्वगोचरे कृष्णभावे किमु कातराः स्मः किं भीता वर्त्तामहे । अपितु न । भवतामेतादृशं दार्ढ्यं यन्महाजनलज्जानुरोधेनाधः प्रापकोऽपि निंदादिरसो न त्यज्यते । वयं तु भवदनुरोधेन परमपुरुषार्थभूतं भक्तिरसं कथं त्यक्ष्याम इति तात्पर्यम् । तेषां दार्ढ्यदर्शनादस्माकमपि दार्ढ्यविचारोऽत्रोपकारः । 28 ।

अर्थ —हे निन्दको ! तार्किको ! और ईर्ष्यालु जनो ! आप सब भली भाँति सुन लें कि जिस प्रकार आप लोग निन्दा, तर्क और असूया करने में शूर हैं, उसी प्रकार हम भी अपने श्रीश्यामसुन्दर के भाव में दृढ़ हैं, कायर नहीं । 28 ।

मूल — मां दम्भिनो दम्भयुतं वदन्तु,
प्रमन्नचित्ता धनिनश्च मत्तम् ।
प्रलोभिनः कर्मरताश्च लुब्धं,
यथाकथञ्चिद्गतिरस्तु कृष्णः ॥ 29 ॥

नन्वन्येऽपि बहवोऽन्तरायास्तर्हि का नो हानिरित्याशयेनाह । ये दंभिनः परप्रतारणं दंभस्तद्धर्म्माणस्ते मां दंभयुतं वदन्तु । ये च धनिनः । कीदृशाः । प्रमत्तं अनवहितं चित्तं येषां ते । मत्तमनवहितमेव वदंतु । ये च कर्मरताः कर्मिणः । कीदृशाः । प्रलोभिनः प्रलोभितुं शीलमेषां जीविकार्थमेव तत्तत्कर्मावलम्बनत्वात् । ते लुब्धं लोभिनमेव वदंतु । अयमर्थः । यथाभस्मपिंडादनलोलुपः पिशाचो यज्ञाद्यर्थमपि प्रदीपितं वह्निं तदर्थमेव मन्यते । एवं सदाचारप्रवृत्तमपि ये यस्मिन् रसे प्रविष्टास्ते तदर्थमेव मन्यंत इति । मम तु यथा कथंचिद्येन केनापि प्रकारेण श्रीकृष्ण एव गतिराश्रयोऽस्तु । 29 ।

अर्थ —दम्भी लोग मुझे भले ही दम्भी बतलावें, अस्थिर मन वाले धनी लोग मुझे भले ही मत्त कहें, अथवा कर्मरत लोभी जन भले ही मुझे लुब्धक समझें । इन सब लोक-धारणाओं से मुझे कुछ लेना-देना नहीं, मैं तो केवल यही चाहता हूँ कि जिस किसी प्रकार से भी श्रीकृष्ण ही मेरे आश्रय हों । 29 ।

मूल—चेदर्थहानिर्मम नापरस्य ह्री किं विवादं जनता विधत्ते ।
स्वधर्ममुद्दूष्य हरिं भजन्वा, धर्मस्य हानिर्ज्वलतात्स धर्मः ॥30॥

ननु स्वधर्म्मपरित्यागेन प्रवृत्ते त्वयि विवदन्ते न वृथेति चेदत आह । स्वधर्म्मं स्ववर्णाद्यहंकारेणानुष्ठेयं धर्म्मं उद्दूष्य । अनादृत्य हरिं भजतश्चेत् यदि अर्थस्य धनपुत्रादेर्हानिस्तर्हि मम नापरस्य नान्यस्य । न ह्यन्यस्य व्यवहारहानावन्यस्य क्लेश-स्तत्तु स्पष्टं दृश्यत एव । धर्मस्य वा हानिश्चेत्स धर्मो ज्वलतात् प्रज्वलतु । हरि-

भजनानुष्ठानेऽप्यसिद्धत्वात् । वस्तुतस्त्वेवं भक्तावेव सर्वार्थधर्मसिद्धेः । तथाऽपि परमतमाश्रित्योक्तं । अत्र तु जनता सर्वलोकः किं विवादं विधत्ते । किमवलंबनं विवादं कुरुते । ही चित्रं अतो वृथा विवादपरा दुःखस्वभावा मनीषिभिरुपेक्ष्या ऐवेति तात्पर्य्यम् । अहो हीत्याश्चर्य इत्यमरः । श्रीमद्भागवते । त्यक्त्वा स्वधर्म्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि । यत्र क्व वा भद्रमभूदमुष्य किं, को वार्थ आप्तो भजतां स्वधर्मतः । 30 ।

अर्थ —वर्ण-और आश्रम-धर्मों को महत्त्व न देकर हरि-भजन करते हुए यदि धन-कुटुम्ब का विनाश होता है तो यह मेरे अपने सोचने की बात है, और लोगों का इस विषय में विवाद करना व्यर्थ है। कहा जाता है कि हरि-भजन से वर्णाश्रम-धर्मों की हानि होती है, तो मैं कहूँगा कि भजन ही सर्वोपरि धर्म है, भजन-विरोधी तथा-कथित ऐसे धर्म का भस्म हो जाना ही अच्छा है। 30 ।

मूल— संविभर्तुमपि देहभवारीन्
भ्रान्तमेव बहुधा कुमनीषैः ।
ते तथैव न तु तोषमवापु-
र्हा ! धिगस्तु किमकारि शुभं नु ।। 31 ।।

एवं भजनदार्ढ्यमुक्त्वेदानीं तद्विमुखान् वस्तुविचारेण धिक्करोति हा कष्टम्। कुमनीषैः कुबुद्धिभिः किं नु शुभं श्रेयोऽकारि कृतं न किमपि। कुतः। देहभवारीन् देहादुत्पन्नशत्रून् क्षुत्पिपासादीन् इन्द्रियाख्यान् वा संविभर्तुं तत्तद् विषयाकृष्टिभिः सम्यक् बहुधा देवमानुषसूकरादिदेहेषु भ्रान्तमेव गतमेव तथापि ते तु रिपवः तोषं न अवापुः न जग्मुः किं तु तथैव तादृशा एव स्वस्वविषयेऽलब्धपूर्वादिवाभिनिवेशात् वृथा श्रमिणो धिगस्तु । 31 ।

अर्थ —अत्यन्त खेद का विषय है कि तथाकथित धर्मपालक अविचारी जनों के द्वारा हमारा श्रेय भला कैसे सम्भव है। क्योंकि वे स्वयं ही अपने देह से उत्पन्न और कभी तृप्त न होने वाले इन्द्रियजन्य विषयों के अधीन होकर भटक गये हैं। 31।

मूल— आत्मात्मजद्रविणदारगृहादिभोगै-
र्मर्त्यस्य कालहुतभुग्जरदिंधनौघैः ।
हं हो ! हरेश्चरणतामरसैकसेवा-
सम्पत्पराङ्मुखमतेरिह कोऽर्थलाभः ।। 32 ।।

ननु कथं वृथा श्रमः धनपुत्रादिसुखस्य प्रत्यक्षत्वात् तत्राह। हंहो कष्टं मर्त्यस्य मरणधर्मिणो नरस्य इह संसारे एतैः कोऽर्थः लाभो न कोऽपि। कैः। आत्मा देहः आत्मजाः पुत्राः–द्रविणं धनं दारादि स्त्रियः गृहाणि च तदादयोऽन्ये स्रक्चन्दनादयश्च ये भोगा भोगसाधनानि तानि ननुतरां व्यर्थानि। तैः कोऽर्थः किमित्युच्यते तत्राह कालेति। कीदृशैः। काल एव हुतभुक् वह्निस्तस्य जीर्णेन्धनराशितुल्यैः। अचिरनश्वरैरित्यर्थः। ननु भवन्तु नश्वरास्तेषां परंपरया सुखी भविष्यतीत्याशंक्य उक्तम्–मर्त्यस्येति। स्वस्य नित्यत्वे तथा संभवेदित्यर्थः। कीदृशस्य मर्त्यस्य हरेश्चरणतामरसयोश्चरण-कमलयोर्या एका केवला सेवा भजनं सैव संपत् सर्वपुरुषार्थाधिष्ठानत्वात्। ततः पराङमुखी बहिर्मुखी मतिर्यस्य तस्य अतस्त्रिकालदुःखावहविनाशिविषयाभि-निवेशेन श्रीभगवद्भजनानन्दसम्पत्तेरलाभाद् व्यर्थः श्रम एवेति तात्पर्य्यम्। 32।

अर्थ —अरे श्री जी के चरण-कमलों के भजन की एकमात्र सम्पत्ति को ठुकराकर जो विमुख हो गये हैं और काल-रूपी अग्नि को प्रज्वलित रखने के लिए सूखे काष्ठ के समान नश्वर-देह, पुत्र, धन, पत्नी, घर और भोगों में फंसे हुए हैं, ऐसे मरणधर्मा मनुष्य को इस जगत् में कोई लाभ नहीं मिल सकता। 32।

मूल—

किं वा करिष्यति यथेष्टरुचिस्तु लोको,
यस्यानुरोधजडधीः करवाणि किञ्चित्।
यस्यां कलम्भितशिरा गतभीः शयिष्ये,
नित्यं भजामि तमजस्रसुखं किमन्यैः॥ 33॥

एवं स्वस्यापि श्रेयसि मूढस्य लोकस्यानुरोधेन स्वश्रेयो विदुषा न बाधनीय-मित्याशयेनाह। यस्य लोकस्य अनुरोधेन संकोचेन जडधीः कुंठमतिः सन् अहं किञ्चित् करवाणि कुर्य्यां स तु लोकः किं वा करिष्यति किं संपादयिष्यति न किमपि। ऐहिकसुखदुःखादेरप्यनुपयोगात्। कीदृशः यथेष्टरुचिः। सात्त्विकादिभेदेन नाना-स्वभावः। भिन्नरुचित्वादसावप्याराधयितुमशक्य इति भावः। अपि तु तं भजामि। कीदृशम्–अजस्रसुखम्। अजस्रं सुखं यस्मात् तद्रूपं वा पुनः कीदृशं यस्य अंकलंभित-शिरा आक्रोडारोपितमूर्द्धा यदाश्रित इत्यर्थः। गतभीर्निर्भयः संशयिष्ये कालाद्य-बाधितपरमानन्दं प्राप्स्यामीत्यर्थः ननु कदाचित् आश्रयणीयाभावे पुनर्भयावाप्तिः स्यात्तत्राह। नित्यम् अविनाशिनं नित्यं भजामीति क्रियाविशेषणं वा। अन्यैः स्वयमपि कालभयाकुलैः ब्रह्मादिभिः किं। न किमपि का वार्ता लोकस्येत्यर्थः। विषयैर्लाभो नास्तीत्युक्तम्। 33।

अर्थ —भिन्न रुचि वाले लोगों के अनुरोध से कार्य करते हुए मैं आज तक

बराबर ठगा गया हूँ। अब जाकर नित्य सुख के स्वरूप श्रीजी की गोद में अपना सिर रखकर निर्भय हो पाया हूँ। और उन्हीं की सेवा में लग गया हूँ। 33।

मूल— तूर्णं विनश्यतु विभूतिरपैतु कीर्ति-
र्जातिर्विलुप्यतु च कुप्यतु सर्वलोकः।
द्यैव वा पततु देहमियं न हानि-
र्हा नीरजाक्ष! मयि तिष्ठतु ते पदाशा ॥ 34॥

इदानीं तु तेषां हानिर्न हानिः। किंतु भगवद्वैमुख्यमेव महाहानिरित्याशयेन प्रार्थयते। हे नीरजाक्ष कमललोचन विभूतिर्धनादिसमृद्धिस्तूर्णं शीघ्रं विनश्यतु तिरोधत्तां। कीर्तिर्यशोऽपैतु अपगच्छतु जातिश्च सामान्यं ब्राह्मणत्वादिर्विलुप्यतु प्रलीयतां। एवं सति सर्वलोकश्च कुप्यतु क्रुध्यतु। किमधिकं यदवलंबि सर्वमेतद् देहमपि अद्यैव वा पततु आवश्यकत्वेन पतनशीलमेव चेत् किं कालविलंबेनेत्यर्थः। इयं तु न हानिर्न क्षतिः किं तु मयि विषये ते तव पदाशा चरणस्पृहा तिष्ठतु। निश्चयं तु हा इति तद्विच्छेदो मा भूदिति खेदद्योतकमव्ययम्। विभूत्यादीनां नाशस्तु स्वदार्ढ्यादिष्टः भक्तानां त्वनभिलषिता एव विभूत्यादयो भवन्त्येवेति भावः। 34।

अर्थ :—अब तो एकमात्र यही कामना है कि, हे कमलनयन, समस्त सम्पत्ति मेरी भले ही विनष्ट हो जाय, यश चला जाय, जाति से च्युत हो जाऊँ, संसार रुष्ट हो जाय अथवा यह देह आज ही न रहे—इन सबको मैं अपनी कोई हानि नहीं समझता—मेरे चित्त में तो बस केवल आपके चरणारविन्दों की सदैव आशा बनी रहे, यह कभी विच्छिन्न न हो। 34।

मूल— आम्नायतात्पर्यमिति प्रसिद्धं
कृष्णैकभक्तिः परमार्थतत्त्वम्।
अन्यस्तु नूनं व्यवहारमार्गो
लोकः स्वभावात्परणेऽनुरक्तः ॥ 35 ॥

ननु श्रुत्युक्तं कर्मापि विभूत्यादिपरमेव कुतोऽतिशयेनोपेक्ष्यते तत्राह। आम्नायस्य वेदस्य तात्पर्य्यम् इति प्रसिद्धं प्रकटमेव। इतीति किम्। कृष्णस्य एका केवला भक्तिः परमार्थतत्त्वं परमार्थवस्तु। तथा च श्रुतिः। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये इति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति च। अन्यस्तु अर्थवादाख्यः

नूनं निश्चितं व्यवहारमार्गः वाणिज्यापदवी प्रवृत्तिनिष्ठत्वात्। श्रुतयश्च पूर्णा दर्वि परापत। सुपूर्णा पुनरापत। वस्नेव विक्रीणा वहा इषमूर्ज॑ शतक्रतो, देहि मे ददामि ते न मे धेहि न ते दधे। अग्निष्टोमेन स्वर्गकामो यजेत। कर्मणा पितृलोक इत्याद्याः तर्हि सर्वे किमिति न मन्यन्ते तत्राह। लोक इति लोको जनः स्वभावात् जन्मपरंपरा-भ्यस्तप्रवृत्तिसंस्कारात् पणने कर्मकाण्डेऽनुरक्तः अनुरागी बभूव न तु वेदविचार-तात्पर्य्यविचारेणेत्यर्थः अतो न श्रुतिर्विभूत्यादिपरेति तात्पर्य्यम्। 35।

अर्थ—कर्मकाण्ड का मार्ग भी वेदोक्त है और विभूतिदायक है। उसकी इतनी उपेक्षा क्यों? इसके उत्तर में कहते हैं कि श्रीनन्दनन्दन के चरण-कमलों की भक्ति ही वेद का वास्तविक तात्पर्य तथा परमार्थ-तत्त्व है। अन्य अर्थवाद निश्चित रूप से व्यावसायिक प्रवृत्ति गर्भित होने के कारण (यथा देहि मे ददामि ते न मे धेहि न ते दधे इत्यादि) शुद्ध व्यवहार-मार्ग है। लोगों की जन्म-परम्परा से व्यावसायिक प्रवृत्ति स्वाभाविक होती है। अतएव वे कर्मकाण्ड के प्रति अनुरक्त हो जाते हैं। 35।

मूल— युक्तं न यद्भूमिसुरो नृपो वा
वैश्योऽङ्घ्रिजो वा स्वकृतिं जहातु।
सेवे सदाहं व्रजराजसूनुं,
भृत्यस्य धर्मः स्वपतेस्तु सेवा॥ 36॥

ननु भवतु भक्तिरेव तत्त्वं तथापि विहिताकरणेन प्रत्यवायः स्यात्तत्राह। यतो भूमिसुरो ब्राह्मणो नृपः क्षत्रियो वा वैश्य ऊरुजः। अङ्घ्रिजः शूद्रो वा स्वकृतिं स्वानुष्ठेयं कर्म जहातु त्यजतु तन्न युक्तं नोचितं। तत्तदभिमानप्राधान्येन वर्त्तमानानां तदनुष्ठानसंभवात्। अलं परकृत्यविचारक्लेशेन—अहन्तु व्रजराजसूनुं नंदतनयं सदा अविच्छेदेन सेवे भजामि। कुतः यतो भृत्यस्य किंकरस्य तु स एव धर्मः या स्वपतेः स्वभर्तुः सेवा तस्य किंकरत्वप्राधान्येन स्थितत्वात्। अभियुक्तश्लोकश्च। नाहं विप्रो न च नरपतिर्नापि वैश्यो न शूद्रो नो वा वर्णी न च गृहपतिर्नो वनस्थो यतिर्वा। किन्तु प्रोद्यन्निखिलपरमानन्दपूर्णामृताब्धेर्गोपीभर्तुः पदकमलयोर्दासदासानुदासः। 36।

अर्थ—जिनको अपने वर्ण का अभिमान बना हुआ है ऐसे ब्राह्मण, क्षत्रिय, वैश्य और शूद्र अपने-अपने स्वभावगत विहित कर्मों का त्याग कर दें—यह उचित नहीं है। मुझसे मेरे अपने वर्ण-धर्म छूट गये हैं और अब मैं सदैव व्रजेन्द्रनन्दन का सेवन दासभाव से करता रहता हूँ, क्योंकि अपने स्वामी की सेवा ही किंकर का सर्वोपरि धर्म है। 36।

मूल—
ये पुण्यमन्यदवयन्ति तदेव कुर्युः
ये चाघमन्यदपि बिभ्यतु ते ततस्तु।
अस्माकमाकलितकृष्ण-कथाशुभाना-
मन्यत्समस्तमपि हा! खलु पापमेव ॥ 37 ॥

किं च तेभ्य आत्मनो विधिनिषेधवैलक्षण्यमाह । ये अन्यत्—पुण्यम् अवयन्ति जानन्ति तदेव कुर्युः । तत्र प्रवृत्ता भवन्तु । ये च अन्यत् अघं पापमपि जानन्ति ते ततः अघात् बिभ्यतु त्रस्यन्तु तत्र मा प्रवर्त्तन्तामित्यर्थः । अस्माकन्तु आकलितं शास्त्र-सदाचार-मनःप्रत्ययैः सम्यग् विचारितम् निःशेषशोधकत्वात् । पुरुषार्थत्वाच्च कृष्णकथैव श्रीकृष्णकीर्तनमेव शुभम् । श्रेयो यैः । सूतवाक्यञ्च । तदेव सत्यं तदुहैव मंगलं तदेव पुण्यं भगवद्गुणोदयं । तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवं । तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽत्र गीयत इति तेषामन्यत् कृष्णकथेतरत् समस्तमपि हा खलु पापमेव निःशेषशोधकत्वस्याप्यभावात् । नैकान्तिकं तद्विकृतेऽपि निःकृते मनः पुनर्धावति चेदसत्पथे—इति षष्ठे च विष्णुदूत-वाक्यम् । हा इति तत्प्रवृत्तिखेदद्योतकमव्ययम् । 37 ।

अर्थ—यह करने से पुण्य होगा और ऐसा करने से पाप लगेगा—इस सम्बन्ध में रुचि रखने वाले (व्रतदानादि) पुण्यार्जन करने के हेतु तथा पापों से बचने के निमित्त प्रयास करते रहें। हमने तो समस्त शास्त्रों का यही अभिप्राय समझा है कि भगवत्कथा-कीर्तनादि ही परम श्रेय हैं, इसके अतिरिक्त सब कुछ पाप है। 37।

मूल—
किमुल्मुकैरतनु तमः परःशतै-
र्नभस्तलादपह्रियते रविं विना।
हरेः पदाम्बुजयुगसेवनादृते,
न साधनैर्मनसि मलोऽपनीयते ॥ 38 ॥

तदेव द्रढयितुमितरेषामशोधकत्वं दृष्टान्तेन वदन् व्यतिरेकतो भक्तेः शोधक-त्वमाह । नभस्तलात् गगनात् रविं विना सूर्यं विना उल्मुकैर्ज्वलत्काष्ठलगुडैः तमः अन्धकारं किं अपह्रियते विनाश्यते अपि तु न । कीदृशं तमः अतनु बहुलं । चरणकम-लद्वयोपासनात् ऋते विना साधनैर्योगयागादिभिः नापनीयते न दूरीक्रियते । उक्तं षष्ठे श्रीशुकाचार्येण तैस्तान्यघानि पूयन्ते तपोदानसमाधिभिः योगव्रतादिभिः । नाधर्मजातं हृदयं तदपीशाङ्घ्रिसेवया इति अपह्रियत इत्यत्र संयोगपरत्वेऽपि न छंदोभंगः प्रेहेवा इति पिंगलसूत्रात् । तथाच माघे । प्राप्तनाभिह्रदमज्जनमाशु-

प्रस्थितं निवसनग्रहणायेति अत्र ह्ल परतो लघुत्वं परःशताद्यास्ते येषां परा संख्या शतादिकादित्यमरः। 38।

अर्थ—सूर्य के बिना जिस प्रकार आकाश का गहन अन्धकार सैकड़ों मशालों से दूर नहीं होता उसी प्रकार श्रीहरि के चरण-कमलों का सेवन किए बिना केवल योग-यज्ञादि साधनों के द्वारा चित्त की कलुषता दूर नहीं होती। 38।

मूल— नन्दनन्दन करोमि वन्दनं
त्वत्पदाब्जरतपादधूलिषु।
एतदेव मम सर्वसाधनं,
बाधनं तदविधानमेव यत्॥ 39॥

ननु सर्वोत्कृष्टा भगवद्भक्तिरित्यवगतं किं तत्साधनमित्यपेक्षायां स्वीयं श्रीकृष्णं प्रार्थयते। हे नंदनन्दन त्वत्पदाब्जरतपादधूलिषु त्वत्पदाब्जयोर्ये रताः अनुरक्तास्तेषां पादधूलिषु चरणरेणुषु वंदनं करोमि। कुतः मम सर्वसाधनं सर्वेषां श्रेयसां साधनं सकलसाधनमिति वा। एतदेव नान्यत्। यत् तदविधानं तस्य अकरणं तदेव बाधनं बाधा निषेध इत्यर्थः। अतो महज्जनपादरज आदरेणैव भक्तिप्राप्तिर्नान्यथेति तात्पर्य्यम्। उक्तं च श्रीप्रह्लादेन। नैषा मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः। महीयसां पादरजोऽभिषेकं निष्किंचनानां न वृणीत यावदिति। 39।

अर्थ—हे नन्दनन्दन आपके श्रीचरणों (चरण-कमलों) का सदैव सेवन करने वाले महापुरुषों की चरण-रज का मैं वन्दन करता हूँ, क्योंकि मेरे सम्पूर्ण श्रेयों का साधन एकमात्र इसी से होगा। महत्पादरज में यदि श्रद्धा नहीं तो भगवद्भक्ति की प्राप्ति में वही सबसे बड़ी बाधा है। अतः मुझे दुर्लभ यह रसिक-पद-रेणु प्राप्त हो सके, ऐसी कृपा कीजिये। 39।

मूल— किं नु लोकमनुयांतमनेकं,
वावदीमि बहुधा रुचिमार्गम्।
भिन्नपान्थजनवादपराणाम्,
स्वं हि वाससुखमेति विनाशम्॥ 40॥

ननु चेदिदमेव परमं साधनं तर्हि नानापक्षस्थाय लोकायापि कथं नोपदिश्यते तत्राह। लोकं जनं किं नु वावदीमि अतिशयेन नु वदामि न किमपीति कीदृशम्—

अनेकं बहुलं । पुनः कीदृशं । बहुधा सात्त्विकादिरूपा या रुचिः स्पृहा तया कल्पितो यो मार्गो देवाराधनादिरूपः पन्थास्तं अनुयान्तमनुगच्छन्तं तद्विधानपरमित्यर्थः । हि युक्तमेतत् भिन्नपान्थजनवादपराणां भिन्नाः पृथग्यातव्या ये पान्थजनाः पथिकास्तैः सह वादपराणां किंजातयो भवन्तः किंनामानः कुत्रत्याः किंप्रयोजना इत्यादिरूपो यो वादः यद्वा समीचीनासमीचीनमार्गगमनाय यो वादः वाक्कलहस्तत्कर्तॄणां स्वं स्वकीयं वाससुखं सेतोरगमनेनोत्तरणस्थानसुखं विनाशमेति याति विनश्यतीत्यर्थः । अतो नानारुचिलोकवादक्लेशेन स्वपरमार्थसुखं विदुषा न बाधनीयमिति तात्पर्य्यम् । 40 ।

अर्थ––महत्पादरजोभिषेक ही यदि सर्वोत्कृष्ट साधन है तो इसी का उपदेश जनसाधारण को क्यों नहीं देते? तब कहते हैं, सात्त्विक, राजस और तामस प्रकृति के भेद से लोक की रुचि और विधि भिन्न है। वे अपने-अपने स्वभाव के अनुसार कल्पित किए हुए आराधना के मार्गों का अनुसरण करते हैं। अतः सहयात्री के साथ ही विचार-विनिमय सुखदायी होता है; जो दूसरे मार्ग पर जा रहे हों ऐसे पथिकों से कहना-सुनना निरर्थक है। 40।

मूल––
ये दातृच्छलनामवाप्य ददते सर्वत्र तीर्थे धनम्
भिक्षावृत्तिविचक्षणा बहुतृषस्तान्याचते किं परः ।
ये त्वानन्दरसामृतैकवपुषः कृष्णस्य वार्तामृतं
निष्कामा वितरन्त्युदारमनसस्तानर्थये सर्वदा ॥41॥

श्रेयोन्तरायभूतं लोकवादमुक्त्वेदानीं स्वावश्यविधेयमाह । अहं तान् सर्वदा अर्थये याचे कान् ये तु कृष्णस्य वार्तामृतं कथामृतं स्वयं निष्कामाः सन्तः परोपकाराय वितरंति ददति । कीदृशाः । उदारमनसः पुष्कलचित्ताः निष्कामत्वात् । कीदृशस्य श्रीकृष्णस्य आनन्दरसामृतैकवपुषः । आनन्दरस एवामृतम् तद्रूपं एकं केवलं वपुर्यस्य तस्य ननूदारमनस्त्वम् लोके बहुषु दृश्यते । तत्राह य इति । ये सर्वत्र तीर्थे सर्वेषु तीर्थेषु धनं ददते किं कृत्वा दातृच्छलनां वयं दातार इति व्याजमवाप्य प्राप्य । कीदृशाः भिक्षावृत्तिविचक्षणाः । भिक्षायां वा तस्या वृत्तिः परिपाटी तस्यां विचक्षणाः निपुणाः । दातृच्छलेन स्वयं प्रार्थयमाना इत्यर्थ : । कीदृशाः । बहुतृषो बह्वी तृष्णा येषां ते देयादधिकमिच्छव इत्यर्थः । तान् परः अन्यः किम् याचते । न किमपि तेषामेवाधिकतृष्णाव्याकुलत्वात् । अतस्तान् तादृशा एव मूढा इन्द्रियारामा दातॄन् मन्यन्ते न श्रेयोर्थिन इति भावः । 41 ।

अर्थ––अपने को दानी मानकर जो समस्त तीर्थों में धन दान किया करते हैं

उनकी तृष्णा का कोई अन्त नहीं होता है। और वे स्वयं भिक्षुक होते हैं। धन देकर उसके बदले में अनन्त भोगों की कामना रखने वालों से कुछ भी चाहना समझदारी नहीं है। याचना तो मैं उनसे करता हूँ जो स्वयं निष्काम हैं और उदार मन से आनन्दामृतवपु श्रीजी के कथामृत का परोपकार के निमित्त वितरण करते रहते हैं। 41।

मूल—भौमं नाद्रियते विनाशिविषयं दिव्याय भोगाय च
द्रुह्यत्येव दुरन्तदुःखततये ब्राह्मं पदं नेच्छति ।
मोक्षादुद्विजति प्रसीदति न च श्रीविष्णुधाम्ने मनः
श्रीराधारतिरंगिणे तु विपिने कृष्णाय लोलुभ्यते ।। 42 ।।

**तान् याचे—इत्युक्तं याचनीयमधुना व्यंजयति। मदीयं मनः भौमं भूसम्बन्धिनं विनाशिविषयं नश्वरं राज्यादिं न आद्रियते न सत्करोति दिव्याय स्वर्गसम्बन्धिने भोगाय च द्रुह्यत्येव वैरायत एव अत्यन्तारुचित्वात्। कीदृशाय दुरंतदुःखततये। दुरन्तं दुष्पारं विषयाधिक्यात् यद् दुःखं तस्य ततिः परम्परा यत्र तस्मै। तथा ब्राह्मं-यद्ब्रह्मणः स्थानं नेच्छति। तर्हि निवृत्तिकामुकं न मोक्षात् विदेहकैवल्यात्। उद्विजति त्रस्यति स्वर्गस्यापि नाशश्रवणात् किं च पार्षदत्वमिच्छु न श्रीविष्णुधाम्ने वैकुंठाय न प्रसीदति न हृष्यति। किन्तु विपिने श्रीवृन्दारण्ये विषये श्रीकृष्णाय लोलुभ्यते अतिस्पृहयति कीदृशाय श्रीराधारतिरंगिणे श्रीराधाप्रीतिविनोदिने एतदेव मया स्पृहणीयं सर्वत इत्यर्थः।। 42 ।।**

अर्थ—मेरा मन पृथ्वी के नश्वर राज्यादि के सुखों का आदर नहीं करता। अरुचिकारक और अनन्त दुःखों के देने वाले स्वर्ग के भोगों से द्रोह रखता है। ब्रह्म पद को नहीं चाहता, मुक्ति से भय मानता है और विष्णुलोक वैकुंठ की प्राप्ति से भी हर्षित नहीं होता। उसे (मेरे मन को) तो श्रीराधा-रति-रंगी वृन्दावन-विहारी श्री लालजी के युगल-चरणों का ही लोभ बना रहता है। 42 ।

मूल— धनाभिमानस्तु धनप्रियाणां,
रूपाभिमानः प्रमदोत्तमानाम्।
विद्याभिमानश्च यथा द्विजानां,
तथैव मे कृष्णकृपाभिमानः ।। 43 ।।

**ननु सर्वं विहाय कथं तत्रैव लोलुभ्यते इत्याशंक्य तत्कृपात एवेत्याशयेनाह।**

धनमेव प्रियं प्रीतिविषयं येषां तेषां तु यथा धनाभिमानः धनजनितो मदः तत्प्रियत्वात् प्रमदोत्तमानां प्रमदासु उत्तमा वरस्त्रियस्तासां यथा रूपाभिमानः सौन्दर्यमदः तत्प्रियत्वात् । द्विजानां ब्राह्मणानां च यथा विद्याभिमानः पाण्डित्यमदः तदभिनिविष्टत्वात् तथैव मे मम कृष्णकृपाभिमानः कृष्णकृपाजनितो मदः । अहो तत्पात्रमहमिति यस्मिन् यस्योत्कृष्टमतिः स तु तत्पात्रत्वेनात्मन्यभिमन्यते । मम तु यथामतिः श्रीकृष्णकृपायामेवेति भावः । अयं त्वभिमानोऽविषयसामर्थ्यात् शुद्धसात्त्विक एव श्रीपरीक्षिदुक्तौ च । वयं धन्यतमा लोके गुरोऽपि क्षत्रबंधवः । यत्पिबामो मुहुस्त्वत्तः पुण्यं कृष्णकथामृतमिति । अतः श्रीकृष्णकृपात एव तत्र लोलुपता नान्यथेति तात्पर्य्यम् । 43।

अर्थ—धन जिनको प्रिय है उनको जिस प्रकार धन का मद होता है, रूपवती नारियों को जैसे अपने रूप का मद होता है और ब्राह्मणों को जैसे अपने पाण्डित्य का मद हो जाता है, उसी प्रकार श्रीनन्दनन्दन के चरण-कमलों में ही एकमात्र रति होने के कारण मैं उनके कृपारस से मत्त बना रहता हूँ। 43।

मूल— यथा सदस्यात्मयशोनिबन्धनै-
यशस्विनः कामिन अंगनोक्तिभिः ।
शिशूदितैः स्निग्धपितुर्यथा तथा
ममारविन्दाक्षजनोदितैः सुखम् ॥ 44 ॥

नन्वात्मनः कृष्णकृपापात्रत्वं त्वया कथं ज्ञातमिति चेदत आह । यथा यशस्विनो यशःप्रियस्य सदसि सभायाम्—आत्मयशोनिबन्धनैः स्वयशसो ग्रथितवचोभिः सुखम् । यथा च कामिनः अंगनोक्तिभिः—उत्कृष्टयुवतिवचनैर्यथा च स्निग्ध-पितुर्वत्सलजनकस्य शिशूदितैर्बालभाषितैस्तथैव मम अरविन्दाक्षजनोदितैः अरविन्दाक्षस्य श्रीकृष्णस्य ये जना भक्तास्तेषामुदितैर्वचोभिः सुखं भवति । अत्र तु स्वस्वानुरागविषयत्वमात्रे दृष्टान्तः अतो महन्मुखारविन्दनिःसृततद्यशो-मकरंदास्वादरसिकतैव श्रीकृष्णकृपालक्षणमिति तात्पर्य्यम् ।44।

अर्थ—जिस प्रकार मान-बड़ाई के इच्छुक जन सभा में अपने यश को सुनकर प्रसन्न होते हैं, कामीजन युवतियों के साथ बातचीत करके हर्षित होते हैं और स्नेही पिता जिस प्रकार अपने बच्चों की तोतली बोली श्रवणकर आह्लादित होते हैं, उसी प्रकार मुझे कमल-नेत्र प्रभु के भक्त जनों की वाणी से सुख मिलता है। 44।

मूल— तप्ते काचन कौमुदी वितृषिते पीयूषपाथोवहा
लुब्धे कश्चन शेवधिर्मृतिभये जीवातुराख्यायिका ।

सा राधाधिपतेर्मम श्रुतिमलंकुर्याद्यदि स्यामह
श्वादौकस्यपि मास्तु वा जनिरलं धिग्वैधसीमन्यथा ।।45।।

तामेव रसिकतां स्पष्टयति। राधाधिपतेः श्रीराधाप्राणनाथस्य सा आख्यायिका। सद्‌भिरनुभूतगुणकथा यदि मम श्रुतिमलंकुर्यात् कर्णं प्रविशेदित्यर्थः। तदा अहं श्वादौकस्यपि चांडालगृहेऽपि स्यां वर्तेयं प्रादुर्भवेयमित्यर्थः। व्यतिरेको मास्तु जनिर्जन्मैव मा भूत् अत्यन्ताभावो भवत्वित्यर्थः। अन्यथा प्रकारान्तरेण वैधसीं ब्रह्मणः सम्बन्धिनीमपि जनिं धिक्। कीदृशी आख्यायिका। तप्ते त्रिविधतापाभिभूते जने काचन अतुल्यप्रभावा कौमुदी चन्द्रिका तदुपशमनीत्यर्थः। पुनः कीदृशी। धर्मफला पुनः कीदृशी। लुब्धे लोभाक्रान्ते कश्चन शेवधिर्निधिः यदनुभवात् तत्तद्धर्मफलक्षुद्रलोभाभावात्। पुनः कीदृशी मृतिभये मरणभयाकुले जीवातुर्जीवनौषधं यदनुभवात् कालभयाभावात्। अत्र प्राप्ते वस्तुन्यसन्तोषस्तृष्णा अप्राप्ते गृध्रता लोभः––आख्यायिकोपलब्धार्थेत्यमरः। 45।

अर्थ––संसार के तापों से संतप्त प्राणियों के लिए शीतल चांदनी, प्यासे के लिए अमृत की नदी, लोभी को खजाना और मृत्यु-भय से भीत को जीवनदात्री वह श्रीराधापति की पावन कथा यदि मेरे श्रवणगोचर होती है तो निम्न जाति में भी हुए अपने जन्म को मैं सार्थक समझता हूँ। अन्यथा मेरे लिए ब्रह्मा की पदवी भी व्यर्थ है। 45।

मूल–– मंदानिलक्षुभितकंजलसत्तडागम्
संफुल्लपल्लवितशाखिकुलावकीर्णम्।
अंभोदविद्युदमलच्छविना द्वयेन
वृन्दावनं श्रितमहं सततं स्मरामि ।। 46 ।।

शिक्षादार्ढ्यमुक्त्वा ततः परमधिष्ठानस्मृतिपूर्वकं स्वाभीष्टमनोरथान् कुरुते। अहं वृन्दावनं सततं निरन्तरं स्मरामि। कीदृशं। मंदानिलेन मन्दवायुना क्षुभितानि कंपितानि यानि कंजानि तैर्लसन्तस्तडागाः सरांसि यत्र तत्। पुनः कीदृशं। संफुल्लाः पुष्पिताः पल्लविताः प्रादुर्भूतकिशलयास्ते च ते शाखिनो वृक्षास्तेषां कुलं वृन्दं तेनावकीर्णं व्याप्तं। पुनः कीदृशं। द्वयेन युगलेन सततमिति काकाक्षिवदत्रापि श्रितमाश्रितं। कीदृशेन द्वयेन। अंभोद–विद्युदमलच्छविना। अंभोदो मेघश्च विद्युच्च तयोरिवामला निर्मला च्छविः कान्तिर्यस्य तत् तेन राधाकृष्णाख्येनेत्यर्थः। 46।

अर्थ––शिक्षा की दृढ़ता का प्रतिपादन करने के बाद अब अपने मनोरथों को कहते हैं। मन्द-मन्द बहने वाली वायु के झकोरों से हिल रहे हैं कमल जिनमें, ऐसे

सुरम्य सरोवरों से परिपूर्ण सघन फूल और पत्रों से सुशोभित वृक्षावलि से आच्छादित नवघन और नव दामिनी की तरह निर्मल युगल जिसका सदैव आश्रय लिए हुए हैं––ऐसे वृन्दावन को मैं निरन्तर स्मरण करता हूँ। 46।

मूल––
भास्वत्सुतातटकुटीरतलैकवासी
वृन्दाटवीललितवीथिचये विलासी।
श्रीराधिकावदनचन्द्रसुधैकजीवी,
सोऽयं ममामितसुलाभगणैकनीवी ॥ 47 ॥

ननु वृन्दावनस्मरणेन किं तत्रैव मम सर्वस्वमित्याह। स अयं मम अमिता अनल्पाः शोभना ये लाभाः। अधिकफलानि––तेषां गणः समूहस्तस्य नीवी मूलधनं कीदृशः। भास्वतः सूर्यस्य सुता यमुना तस्यास्तटे तीरे यः कुटीरः अल्पलताकुटी तस्य तलं अभ्यन्तरभूमिस्तत्र एकं मुख्यं उषितुं शीलमस्य। पुनः कीदृशः। वृन्दाटव्याः ललितो मनोरमो यो वीथिचयः पंक्तिसमूहस्तत्र विलसितुं चंक्रमणक्रीडां कर्त्तुं शीलं यस्य सः। पुनः कीदृशः। श्रीराधिकावदनचन्द्रस्य या सुधा रूपामृतं तयोः केवलं जीवितुं चेतितुं शीलमस्य सः। अनवलोकने व्याकुलत्वात्। अत्र प्रान्तानुप्रासः। अल्पा कुटी कुटीरः स्यादिति। वीथ्यालिरावली पंक्तिरित्यमरः। नीवी परियणं मूलधनं लाभोऽधिकं फलमिति च। 47।

अर्थ––श्रीवृन्दावन का स्मरण इसलिए कर रहे हैं कि वहाँ यमुनातटवर्ती कुंज-कुटीर के निवासी वृन्दावन की मनोरम निकुंज-गलियों में क्रीडा करने के अभिलाषी श्रीराधा रानी के मुखचन्द्र की सुधा ही जिनका जीवन है, ऐसे श्यामसुन्दर मेरे अमूल्य धन हैं। 47।

मूल––
रोचिष्णुचन्द्रकशिरोसितकण्ठपिच्छ-
स्तापिच्छदीधितिरपारकटाक्षभंगिः।
उत्तप्तहाटकसमुज्ज्वलपिंगवासाः
कोऽयं युवा हरति मेऽखिलचित्तवृत्तिम् ॥ 48 ॥

ननु कथं दूरतरे वस्तुन्याग्रहस्तैनैव मनोहरत्वादित्याह। कोऽयमतर्क्यो युवा तरुणो मे मम अखिलचित्तवृत्तिं समस्तमनोव्यापारं हरति चोरयति स्वप्रवणं करोतीत्यर्थः। कीदृशः। रोचिष्णवः शोभनशीलाश्चंद्रका ज्योतिर्वलयानि येषु तानि शिरसि असितकंठानां मयूराणां पिच्छानि यस्य सः। पुनः कीदृशः। तापिच्छदीधि-

तिस्तमालश्यामः । पुनः कीदृशः । अपाराणां अपरिमितानां कटाक्षाणामपांगावलोकानां भंगिर्वक्रिमा यस्य सः । पुनः कीदृशः । उत्तमं दाहोज्ज्वलं हाटकं सुवर्णं तद्वत् समुज्ज्वलं निर्मलं पिंगं पिशंगवर्णं वासो यस्य सः कालस्कंधस्तमालः स्यात्तापिच्छ इत्यमरः । कटाक्षोऽपांगदर्शन इति च । यद्गतागतविश्रांतिनैपुण्येन विवर्त्तनं । तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षत इति संगीते च । पिंगपिशंगौ कद्रुपिंगलावित्यमरः । 48 ।

अर्थ—प्रभामण्डल से देदीप्यमान मयूरपिच्छों से सुशोभित तमाल की तरह श्यामल वर्ण, अनन्त कटाक्षयुक्त, तपे हुए सुवर्ण सदृश स्वच्छ पीताम्बरधारी यह किशोर कौन है जो मेरी समस्त चित्तवृत्तियों का अपहरण कर रहा है। 48 ।

मूल— वृन्दावने कुसुमसन्ततिसङ्गिवाते
पूर्णेन्दुकोमलकरप्रकरप्रकाशे ।
सप्राणनाथवनिताशतनृत्यलीलां
मंजीरकांचिवलयस्वनितां स्मरामि ॥ 49 ॥

नन्वखिलचित्तवृत्तिं कथं हरति लीलारसरीत्याशयेन लीलान्तरं स्मरति । वृन्दावने प्राणनाथेन श्रीकृष्णेन सह वर्त्तमानानां वनितानामनुरक्तस्त्रीणां यानि शतानि तेषां या नृत्यलीला रासविलासस्तां स्मरामि चिंतयामि । कीदृशे वृन्दावने कुसुमानां संततिः सुविस्तारस्तस्याः संगो यस्य स वातो वायुर्यत्र तस्मिन् । पुनः कीदृशे । पूर्णः अखण्डमंडलो य इन्दुश्चन्द्रस्तस्य कोमलकराणां मृदुरश्मीनां प्रकरस्य पुंजस्य प्रकाशः प्रद्योतो यत्र तस्मिन् । कीदृशीं लीलां मंजीराणि नूपुराणि कांचयो मेखलाश्च वलयानि कटकानि च तेषां स्वनितं स्वनो यस्यां सा तां । वनिता जनितात्यर्थानुरागायां च योषितीत्यमरः । आवापकः पारिहार्यः कटकं वलयोऽस्त्रियामिति च । 49 ।

अर्थ—खिले हुए फूलों से जहाँ की वायु अठखेलियाँ करती हुई बह रही है, पूर्णचन्द्र की कोमल ज्योत्स्ना जहाँ पर बिखरी पड़ी है, ऐसे श्रीवृन्दावन में नूपुर, किंकिणी और कंकण की गूँज से रसपूर्ण, प्राणनाथ श्रीनन्दनन्दन की सैकड़ों व्रजयुवतियों के साथ निरन्तर चलती हुई नृत्य-लीला का चिन्तन करता हूँ। 49 ।

मूल— निजुष्टं कालिन्दीललितलहरीकेलिमरुता
स्फुरद्गौरश्यामप्रचुरमहसाकीर्णविवरम् ।
कदा वृन्दाटव्यां मधुपवनितान्दोलितलतं
पुरो दृष्ट्वा मोदे कुसुमितमहं कुंजसदनम् ॥ 50 ॥

मनोरथांतरं कुरुते । अहं कदा भाग्योदयकाले कुंजसदनं कुञ्जमन्दिरं पुरोऽग्रे दृष्ट्वा मोदे हृष्यामि । कीदृशं । कालिंद्याः श्रीयमुनायाः ललितलहरीषु रमणीय-तरंगेषु केलिः संचारेणान्दोलनरूपा क्रीडा यस्य स चासौ मरुत् वायुस्तेन निजुष्टं निषेवितं । पुनः कीदृशं । स्फुरत् चमत्कुर्वत् गौरं श्यामं च यत् प्रचुरं निविडं मह-स्तेजस्तेन आकीर्णविवरं व्याप्तरंध्रं । रंध्रं द्वाराद् बहिरुल्लसदन्तर्गतश्रीराधाकृष्णांग-दीप्तिमंडलमित्यर्थः । पुनः कीदृशं । मधुपवनिताभिः भ्रमरीभिः आन्दोलिताः आक्रमणेन कंपिता लता यत्र तत् । पुनः कीदृशं । कुसुमितं पुष्पितम् । 50 ।

अर्थ—श्रीयमुनाजी की ललित लहरियों से उलझकर उनको चंचल बनाती हुई समीर द्वारा सेवित, कुंज-छिद्रों से छलक कर उफनते हुए गौर श्याम तेजसे परिपूर्ण, भ्रमरियों के भार से प्रकंपित लताओं से युक्त और गुच्छ-गुच्छ विकसित पुष्पों से शोभायमान निकुंज मन्दिर का सौभाग्य से सामने दर्शन पा कर मैं कब कृत-कृत्य हो उठूंगा? । 50 ।

मूल— आनन्दमाधुर्यलतैकबीजं
सौन्दर्यपाथोधिलसत्सुरत्नम् ।
लावण्यपेटां कलयामि चित्ते
श्रीराधिकाकृष्णमुखेन्दुबिम्बम् ।। 51 ।।

किंच । श्रीराधिकाकृष्णयोर्मुखेन्दुबिम्बं मुखचन्द्रमंडलं चित्ते कलयामि धारयामि ध्यायामीत्यर्थः । कीदृशं । आनन्दमाधुर्यलतैकबीजं । आनन्दश्च माधुर्यञ्च तद्रूप-लतयोर्वल्ल्योर्बीजमुद्गमस्थानं । अतिमुदितमधुरमित्यर्थः । पुनः कीदृशं । सौन्दर्यं सुन्दरता तस्य पाथोधिः समुद्रस्तत्र लसच्चकासमानं सुष्ठुरत्नमुत्कृष्टमाणिक्यं । अतिसुन्दरमित्यर्थः । लावण्यं चेष्टाचमत्कारस्तस्य पेटा मंजूषा ताम् । पिटकः पेटकः पेटा मंजूषेत्यमरः । 51 ।

अर्थ—आनंदलता और माधुर्यलता के एकमात्र उद्गम स्थल, सौन्दर्य-समुद्र के उत्कृष्ट रत्न, सलौनी छवि के निधान श्रीलालप्रिया के मुखरूपी चन्द्रमण्डल का प्रतिक्षण मन में ध्यान करता हूं । 51 ।

मूल— सुभगमुखहिमांशोश्चन्द्रिका धौतहारः
क्षणमभिमुखमायद्भृङ्गभीत्या सुलोलम् ।
उरसि सपदि लग्नप्रेयसीकान्तिपुष्टः
प्रथयतु भविकं नः सर्वदा कृष्णहासः ।। 52 ।।

किंच । मनोरथांतरं । कृष्णहासः श्रीकृष्णहास्यं नोऽस्माकं सर्वदा निरन्तरं भविकं मंगलं प्रथयतु विस्तारयतु । कीदृशः । सुभगं सुन्दरं यन्मुखं तदेव हिमांशुश्चंद्रस्तस्य चंद्रिका शीतलत्वचमत्कारादिसाधर्म्यात् । पुनः कीदृशः । धौतहारः अत्युज्ज्वलित मौक्तिकमालः । पुनः कीदृशः । क्षणं अभिमुखं संमुखं आयन्त आगच्छंतो ये भृंगा भ्रमरास्तेभ्यो या भीतिर्भयं तया सुलोलं अधीरं यथा स्यात्तथा उरसि वक्षःस्थले सपदि लग्ना शीघ्रमालिंगिता या प्रेयसी अतिप्रिया श्रीराधिका तस्याः कांत्या दीप्त्या पुष्टः वर्द्धिततेजसा बहुलीकृत इत्यर्थः । हासप्रवृत्तिहेतुरत्र वैक्लव्यदर्शनमेवेति ज्ञेयं । हारो मुक्तावली देवच्छंदोऽसौ शतयष्टिकेत्यमरः । भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियामिति च । 52 ।

अर्थ—सुन्दर मुख-रूपी चन्द्रमा की चाँदनी-स्वरूप, अत्यंत उज्ज्वल मोतियों की माला सदृश, अकस्मात् क्षण भर को सम्मुख आते हुए भ्रमरों के भय से व्यस्त होकर, शीघ्र प्रियतम के वक्षस्थल से संलग्न प्रिया की कांति से देदीप्यमान नन्द-नन्दन की हँसी सदैव हमारा मंगल करे । 52 ।

मूल— पुरटपटलकान्तिर्माधुरीणां धुरीणा
प्रणयरसनिमग्ना सर्वचातुर्यसीमा ।
व्रततिविततिगेहे प्रेयसाश्लिष्टमूर्तिः
प्रविशतु हृदि राधा बाधिताशेषवृत्तिः ।। 53 ।।

तमेव विलासं ध्यानत्वेनेच्छति । राधा मे हृदि मनसि प्रविशतु । कीदृशी । बाधिता तिरस्कृता अशेषा समस्ता अन्यविषया वृत्तिर्यया । अनन्यत्वेन प्रविशत्वित्यर्थः । पुनः कीदृशी । पुरटपटलं कनकसमूहस्तद्वत्कांतिर्यस्याः सा । पुनः कीदृशी । माधुरीणां धुरीणा धुरंवहा अतिमधुरेत्यर्थः । पुनः कीदृशी । प्रणयरसे स्नेहरसे निमग्ना श्रीकृष्णविषयकप्रेमाविष्टेत्यर्थः । पुनः कीदृशी । सर्वचातुर्यस्याखिलनैपुण्यस्य सीमा अवधिः । पुनः कीदृशी । व्रततीनां लतानां विततिः समूहस्तन्मयं यद्गेहं तत्र प्रेयसा कृष्णेनाश्लिष्टमूर्तिः आलिंगिततनुः । 53 ।

अर्थ—तप्त सुवर्ण-सदृश है अंग-कांति जिनकी, अत्यन्त मधुर श्रीलालजी के प्रेम-रस में निमग्न, अखिल निपुणता की अवधि और सघन लता-मंदिर में लाड़वश लाल से आलिंगित श्रीराधा बहिर्मुखी समस्त वृत्तियों को अपने सहज रूप से बाधित करती हुई मेरे मन में प्रविष्ट हों । 53 ।

मूल— वासन्तिकाललितलोललताभराणां,
भृङ्गांगनासरसचुम्बितपुष्पकाणाम् ।

गुम्फंतमिन्दुवदनाचिकुरेषु मल्ली-
मन्तःस्थले मणिचिते हरिमाश्रयामि ॥ 54 ॥

विलासांतरं स्मरति । हरिमाश्रयामि भजामि । कीदृशं । वासंतिका माधवी तस्या ललितं यथा स्यात्तथा लोलाः समीरणांदोलनेन चंचला ये लतापुंजास्तेषां । अंतःस्थलेऽभ्यंतरभूमौ इन्दुवदनाचिकुरेषु चन्द्रमुख्याः श्रीराधायाः केशेषु मल्लीं मल्लिकाकुसुमं जातावेकवचनं । गुंफंतं ग्रथयंतं । कीदृशे अंतःस्थले मणिचिते मणिभिः संबद्धे । कीदृशानां । लताभराणां । भृंगांगनासरसचुंबितपुष्पकाणाम् । भृंगांगनाभिः सरसं चुंबितानि उपस्पृष्टानि पुष्पाणि येषां तेषामुत्तरोत्तरश्रैष्ठ्य-दर्शनादेकत्राभिनिवेशाभावाच्चुंबितत्वमुक्तं । वासंती माधवी लतेत्यमरः । 54 ।

अर्थ—भ्रमरियों के द्वारा चुंबित सरस पुष्पों के भार से झुकी हुई माधवी की ललित और (शीतल-मन्द-सुगन्ध) समीर के द्वारा चंचल लताओं के अन्तराल में मणिमय भूमि पर विराजमान विधुवदनी श्रीवृषभानुनंदिनी की वेणी में चमेली के फूलों को गूंथते हुए नन्दनन्दन का मैं आश्रय ग्रहण करता हूँ । 54 ।

मूल— हिमकरकरपुंजज्योतिषा पीतयंती,
वनभुवमभितोऽग्रे राधिकापन्नखाली ।
अनुनयपरकृष्णस्यालिकं चित्रयंती,
नयनयुगलमारान्मे कदावर्वरीतु ॥ 55 ॥

विलासांतरं स्मरन् दर्शनेनेच्छति । राधिकापन्नखाली । श्रीराधिकापदनख-पंक्तिर्मे नयनयुगलं कदा धन्यसमये आरात् दूरात् आवर्वरीतु अतिशयेनावृणोतु । ज्योतिष्मतस्तथात्वसंभवात् । कीदृशी । हिमकरस्य चन्द्रस्य करपुंजो रश्मिपटलं तद्वज्ज्योतिश्चाकचिक्यं तेन वनभुवं श्रीवृंदावनभूमिं अभितः सर्वतः पुरः अग्रे पीतयंती पीतवर्णां कुर्वंती प्रसरणशीलत्वाज्ज्योतिषः । पुनः कीदृशी । अनुनयः प्रसादनं तत्परो यः कृष्णस्तस्य । अलिकं ललाटं । चित्रयंती कर्बुरयंती प्रतिबिंबित-त्वात् । अत्र नतिर्ध्वनिता प्रणयकोपेनागच्छंत्याः पथि कृष्णेन प्रणतिभिरनुनीयमानाया राधायाः पदनखपंक्तिस्तदवसरे कदा मे दृग्गोचरीभवत्वित्यर्थः । ललाटमलिकं गोधिरित्यमरः । 55 ।

अर्थ—चन्द्रकिरणों की भाँति अपनी ज्योति से समस्त वृन्दावन की भूमि को पीत बनाती हुई तथा (मान की अवस्था में) अनुनयपरक नमित श्रीकृष्ण के भाल-स्थल को अपने कांति-बिंब से चित्रित करती हुई श्रीजी की पदनखपंक्ति कब मेरे दृष्टिपथ में आएगी ? । 55 ।

मूल— भुजगरिपुशिखंडोत्तंसमालोलचक्षु—
भृं कुटिललितभंगिश्रांतभृं गाभकेशम् ।]
मृदुपवननिकुंचद्वेणुसक्ताधरोष्ठं,
स्फुरतु मनसि साचिग्रीवमास्यं विभोर्मे ।। 56 ।।

मनोरथांतरं कुरुते। विभोः श्रीकृष्णस्य आस्यं मुखं मे मनसि स्फुरतु चमत्करोतु। कीदृशं। भुजगरिपोर्मयूरस्य शिखण्डः पिच्छं तस्य उत्तंसः शिरोभूषा यस्मिंस्तत्। पुनः कीदृशं। आलोले सर्वतश्चपले चक्षुषी यस्मिंस्तत्। पुनः कीदृशं। भृकुट्योर्भ्रुवोर्ललिता मनोरमा भंगिर्वक्रिमा यस्मिंस्तत्। पुनः कीदृशं। श्रांताः श्रमं प्राप्ता ये भृंगा भ्रमरास्तेषामाभेवाभा येषां ते केशा यस्मिंस्तत्। श्रांतत्वेनाचलत्वमुत्प्रेक्षितं। पुनः कीदृशं। मृदुपवनेन कोमलफूत्कृत्या निकुंचंतौ संपुटीभवंतौ च तौ वेणुसक्तौ मुरलीरंध्रलग्नौ अधरोष्ठौ अधस्तनोपरितनौ दशनांचलौ यस्मिंस्तत्। पुनः कीदृशं। साचि तिरश्चीना ग्रीवा यस्मिंस्तत्। वेणुवादनात्। शिखंडस्तु पिच्छं वर्हं नपुंसके इत्यमरः। अवतंसः कर्णभूषोत्तंसः स्याच्छिरसस्तु स इति वचनम्। 56।

अर्थ—मधुर भृकुटी, चंचल नेत्र, भृकुटी की टेढ़ी भंगिमा से ललित श्रांत होने के कारण निश्चल बैठी हुई भ्रमरावलि की आभा के समान केशों की छटा से मंडित, कुछ टेढ़े अधरों पर संलग्न बाँसुरी को कोमल फूंक से छेड़ते हुए, गर्दन के टेढ़े होने से सुन्दर दिखाई देने वाले मेरे ठाकुर का मुखारविन्द मेरे मन में स्फुरित हो। 56।

मूल— श्यामांभोरुहकोषगर्भवपुषं किंजल्कगौराम्बरं,
नीलग्रीवशिखण्डमंडितकचं गंडस्फुरत्कुंडलम्।
किंचिद्वक्रिमशोभिहारलतिकं पर्यायलोलांगुलि
तिर्यक्कंठममंदवेणुनिरतं ध्यायामि राधाधवम् ।। 57 ।।

किं च। राधाधवं राधापतिं ध्यायामि। कीदृशं। अमंदं गाढं यथा स्यात्तथा वेणुनिरतं मुरलीवादनासक्तं। पुनः कीदृशं। श्यामांभोरुहं नीलोत्पलं तस्य कोषः ईषत्स्फुटकलिका तस्य गर्भः अभ्यंतरं तद्वद्वपुर्यस्य तं। श्यामत्वस्निग्धत्वसुरभित्वादिसाधर्म्यात्। पुनः कीदृशं। किंजल्कवत् केसरवद् गौरमंबरं यस्य तं। पुनः कीदृशं। नीलग्रीवो मयूरस्तस्य शिखंडेन पिच्छेन मंडिताः शोभिताः कचा यस्य तं। पुनः कीदृशं। गंडस्फुरत्कुंडलं। गंडयोः कपोलयोः स्फुरंती प्रतिबिंबेन चमत्कुर्वती कुंडले यस्य तं। पुनः कीदृशं। किंचिद्वक्रिमशोभिहारलतिकं। किंचिद्वक्रिम्णा ईषत्तिरश्चीनतया शोभनशीला हारलतिका मुक्तावली यस्य तं। वेणुवादनसमये असमस्थित-

त्वात् । पुनः कीदृशं । पर्यायलोलांगुलिं पर्यायेण क्रमेण लोलाः वेणुरंध्रेषु चंचलाः अंगुलयो यस्य तं । पुनः कीदृशं । तिर्यक्कंठं तिरश्चीनः कंठो यस्य त्रिभंगित्वात्तम् । 57 ।

अर्थ––नील कमल-कलिका के भीतरी भाग के समान है वपु जिनका, केशर के समान पीत वसन धारण किए हुए, मोरपंख से जिनकी अलकावलि सुशोभित है, स्वच्छ और स्निग्ध कपोलों पर जिनके कुंडल प्रतिबिंबित हो रहे हैं, वेणु-वादन के कारण बाँके वक्षस्थल पर बाँकी हो रही है हारावली जिनकी, बारी-बारी से वंशी के छिद्रों पर तीव्र स्वर गति के कारण चंचल हो रही हैं अँगुलियाँ जिनकी, प्रगाढ़ रूप से मुरली बजाने में निरत, टेढ़ी गरदन किए हुए राधापति का मैं ध्यान करता हूँ । 57 ।

मूल––नैव वासमिह नाथ कामये, नो विवासमपि भावभेदतः ।
यन्निगूढतरधाम ते वनं, चाकसीतु हृदये यथातथम् ।। 58 ।।

ननु राधापतिध्यानयोग्यता कथं संपद्येत श्रीवृंदावनतत्त्वस्फुरणादित्याशयेन तदर्थमेव श्रीकृष्णमर्थयते । हे नाथ कृष्ण इह वने वासमेव न कामये नेच्छामि । विवासं अवासमपि नो वांछामि । कुतः भावभेदतः भावनाभेदात् । तत्तद्वांछायां तत्तद्भावपर्य्यवसितत्वात् । तर्हि किमिच्छसि तत्राह । तद् वनं श्रीवृन्दावनाख्यं मे हृदये यथातथं याथातथ्येन यादृग्रसक्रीडाधिष्ठानतया वर्त्तते तादृग्भावेनेत्यर्थः । चाकशीतु अतिशयेन प्रकाशतां । तत्र प्रेमा वर्द्धतामित्यर्थः । किं वनं यत् ते तव निगूढतरधाम अतिगोप्यं स्थानं । अत्रानुरागो न वासबलेन न विवासेन किंतु केवलमतर्क्यहेतुत्वदनुकंपयैवेत्यर्थः । 58 ।

अर्थ ––हे नाथ! केवल वास मात्र के हेतु भी वृन्दावन में रहने से मुझे संतोष नहीं होता, और मैं रहना नहीं चाहता यह भी मुझे इष्ट नहीं है ? वस्तुतः मेरा आशय यह है कि नित्यविहार प्रकाशक श्रीवृन्दावन सहज रूप से मेरे मन में आलोकित हो उठे । यह तो आपकी मात्र अहैतुकी कृपा से ही संभव है । अर्थात् वृन्दावन के रसात्मक तत्त्व को हृदयंगम करने की आकांक्षा है न कि बाह्य स्वरूप को । 58 ।

मूल–– हे राधाभिमत, प्रफुल्लजलजप्रक्षेपिलोलेक्षण,
स्निग्धांभोदतनो तडिद्द्युतिपटाखंडेंदुबिंबानन ।
श्रीवृन्दावनकुंजकेलिरसिकं प्रोन्नीतवेणुध्वनि–
क्षिप्ताभीरवधूकुलव्रत हरे! मां दीनमानंदय ।।59।।

नन्वेतादृशोऽधिकारः कथं संपद्येत । श्रद्धानुरागेणैव । स तु श्रीकृष्णानुकंपैकलभ्य इत्याशयेन बहुधा संबोधयंस्तमेव प्रार्थयते । हे राधाभिमत राधाप्रिय फुल्लं विकचं यज्जलजं तत् प्रक्षेप्तुं तिरस्कर्त्तुं शीलं ययोस्ते च ते लोले चपले ईक्षणे नेत्रे यस्य हे तादृश हे स्निग्धांभोदतनो चिक्वणजलदांग! हे तडिद्द्युतिपट विद्युत्कांतिवसन। हे अखंडेंदुबिंबानन पूर्णचंद्रमंडलमुख । हे श्रीवृन्दावनकुंज-केलिरसिक श्रीवृन्दावन-कुंजक्रीडाविष्टचित्त। प्रोन्नीतो मूर्च्छितो यो वेणुध्वनिर्वंशीनादस्तेन क्षिप्तं नारीणां आभीरवधूनां, गोपवधूनां कुलव्रतं कुलधर्मो येन। स्वविषयकप्रेमजननात् । हे तादृश हे हरे क्लेशहर मां दीनं कृपणं आनेदय नेदीयांसं निकटवर्त्तिनं कुरु स्वविषयानुरागं जनयेत्यर्थः । 59।

अर्थ—फूले हुए कमल की कांति को लजाने वाले जिनके नेत्र चंचल हैं, स्निग्ध बादल के समान शरीर वाले, बिजली के सदृश पीत वस्त्र धारण किए हुए, पूर्णचंद्र के समान मुख से सुशोभित, वृन्दावन-कुंजों की क्रीड़ा के रसिक, बेसुध बनाने वाले, वेणुनाद से व्रज की वधुओं के कुलाचार-व्रत को विनष्ट करने वाले, क्लेशहारी, हे राधाप्रिय! मुझ दीन को अपनी समीपता दीजिए अथवा अपनी रति देकर आनंदित कीजिए। 59।

मूल—यामुने पयसि केलिविलोलं लोलपल्लवकरैर्व्रजदारैः ।
उक्ष्यमाणमभितः पिदधानं चक्षुषी हरिमवाप्नुहि चेतः ।। 60 ।।

ननु किं तच्चकासनेन सर्वविलासस्फूर्त्तिरिति द्योतयन् मनोरथं कुरुते । हे चेतः त्वं हरिं अवाप्नुहि विषयीकुर्वित्यर्थः । कीदृशं । यामुने पयसि यमुनाजले केलिविलोलं क्रीडाचंचलं । पुनः कीदृशं । व्रजदारैर्व्रजांगनाभिः अभितः सर्वतः उक्ष्यमाणं सिच्यमानं । कीदृशैर्व्रजदारैः । लोलाः सेचनेन चंचलाः पल्लवा इव करा येषां तैः । कीदृशं । हरि-चक्षुषी नेत्रे पिदधानं कराभ्यामाच्छादयंतं सर्वतः सेचनाकुलत्वात् । 60।

अर्थ—श्रीयमुना-जल में क्रीडा करते हुए अतिशय चंचल, एवं व्रजांगनाओं के द्वारा (श्रीलाल जी पर) उलीचे गए जल से बचने के हेतु अपने दोनों नेत्रों को हस्तकमल से बन्द किए हुए नन्दनन्दन मेरे ध्यान के विषय हों। 60।

मूल— उपयमुनमनोकहावलीना –
मविरलपत्रभृतां तले तले यन् ।
तदधिजलमुपांतगेष्टशोभा –
महह विलोक्य कदा नु मूर्छितः स्याम् ।। 61 ।।

मनोरथांतरं । अहह इति दैन्ये नु इति वितर्के । अहं कदा नु कस्मिन्समये नु मूर्च्छितः

स्यां विवशो भवेयं । किं कुर्वन् । उपयमुनं यमुनायाः समीपे अनोकहावलीनां वृक्ष-पंक्तीनां तले तले अधस्तात् अधस्तात् यन् गच्छन् । किं कृत्वा । तदधिजलं तस्या यमुनाया अधिजलं उपांतगेष्टशोभां उपांते तीरे गच्छत इति तौ च ताविष्टौ श्रीराधा-कृष्णौ तयोः शोभां तत्र प्रतिबिंबितामित्यर्थः । विलोक्य दृष्ट्वा । कीदृशीनामनोकहा-वलीनां अविरलपत्रभृतां अविरलानि सघनानि यानि पत्राणि तानि बिभ्रति धारयंति यास्तासां । छायासौष्ठवं सूचितं । यमुनातीरे गच्छन् कुंजांतरितयोः पुरतः कोणस्थयो-स्तयोः । श्रीराधाकृष्णयोर्दर्शनात्पूर्वमेव स्वच्छमेव प्रतिबिंबं दृष्ट्वानंदाविष्टः कदा नु भवेयमिति तात्पर्य्यम् । अनोकहस्तरुः शाखीत्यमरः । 61 ।

अर्थ—श्रीयमुनातटवर्ती सघन वृक्षावली के नीचे से संचरण करते हुए मैं युगल के मुखारविंद की शोभा को जल में प्रतिबिंबित एवं झलझलाती देखकर कब तन-मन की सुध भूल जाऊँगा । 61 ।

मूल—नृत्यच्चारुकरांगुलिः सुललितं तानातितानाकर-
ध्वानस्फारितमाधुरीविषमिताऽऽवैकुण्ठलोकस्थितिः ।
आत्मप्राणसमानदक्षिणवधूकुंचन्म्रदीयोधर-
द्वन्द्वापूरितफूत्कृतिः श्रुतिमियात्कृष्णस्य वंशी कदा ॥ 62 ॥

मनोरथांतरं । श्रीकृष्णस्य वंशी मुरली मे श्रुतिं कर्णं कदा ईयात् व्रजेत् प्रविशे-दित्यर्थः । वंशीत्यत्रोपचारत्वेन तन्नाद इति ज्ञेयं । कीदृशी । नृत्यच्चारुकरांगुलिः । नृत्यंतः रंध्रेषु नतोन्नतं चलंत्यश्चारवो मनोहराः करांगुलयो यस्यां सा । पुनः कीदृशी । सुललितं यथा स्यात्तथा तानानां रागद्वयसंधीनां अतितानो बहुविस्तारस्तस्य आकर उत्पत्तिस्थानं यो ध्वानस्तेन स्फारिता प्रकीर्णतया संचारितेति यावत् । या माधुरी—तया विषमिता विषमत्वं प्रापिता । आवैकुंठं वैकुंठमभिव्याप्य लोकस्थितिः मर्यादा यया । इतः साधनभेदैस्तत्र तत्रारूढा ध्वनिं श्रुत्वा पुनरित आगंतुमैच्छन्नित्यर्थः । पुनः कीदृशी । आत्मनः प्राणसमाना प्राणतुल्या दक्षिणा प्रवीणा चासौ वधूः श्रीराधा तस्याः कुंचत् म्रदीयः अतिकोमलं यदधरद्वंद्वं तेन आपूरिता रंध्रीद्वारा संयोजिता फूत्कृतिर्मुखानिलो यस्यां । क्वचिदेकपर्यायत्वादधरद्वंद्वमित्युक्तम् । 62 ।

अर्थ—नाच रही हैं मनोहर करों की अँगुलियाँ जिस पर, सुललित राग रागि-नियों के तान और अलाप के विस्तार से फैलती हुई माधुरी से वैकुंठ-पर्यन्त लोकों को व्याप्त करती हुई, अपनी प्राण-समान परम प्रवीण वधू श्रीराधा के अति कोमल अधर-युगल से निःसृत फूंक से आपूरित श्रीनन्दनन्दन की वंशी मैं कब सुन पाऊँगा? । 62 ।

मूल— सर्वोत्साहमयोऽपि यत्करतलध्वानैः समुत्साहितः
शक्त्या नर्तयितापि सेशजगतां याभिः पुरो नर्त्तितः ।
दूराद्गापयितापि वेदविदुषां याभिः स्फुटं गापित-
स्तासां श्रीव्रजयोषितां पदरजो वन्देऽथ नन्दामि च ।। 63 ।।

श्रीकृष्णस्य प्रेमैकवशतां दर्शयंस्तत्कारणमपि सूचयन्नाह। तासां श्रीव्रजयोषितां पदरजश्चरणरेणुं वंदे । अथ कृतकृत्यत्वान्नंदामि हृष्यामि च । कासां । सर्वेषां ब्रह्मादीनां य उत्साहश्चित्तोल्लासस्तन्मयस्तद्रूपोऽपि श्रीकृष्णः यत्करतलध्वानैर्यासां करतलनादैः समुत्साहितः सम्यगुत्साहं प्रापितः । पुनः कीदृशीनां । शक्त्या मायया सेशजगतां लोकनाथसहितलोकानां नर्त्तयितापि नानाभावैर्व्यापारयितापि याभिः पुरोऽग्रे नर्त्तितः । पुनः कीदृशीनां । वेदविदुषां वेदा एव विद्वांसः तेषु वा विद्वांसस्तेषां दूरात् लक्षणोपलक्षितपरोक्षवादैर्गापयितापि स्तावयितापि याभिः स्फुटं प्रत्यक्षं गापितः । उक्तं च दशमे श्रीशुकाचार्येण गोपीभिः स्तोभितोऽनृत्यद् भगवान् बालवत् क्वचित् । उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयंत्रवदिति ।63।

अर्थ—जो सबके आनन्दस्वरूप हैं, वे स्वयं गोपियों के ताली बजाने से आनन्दित होते हैं। जो सबको अपनी माया से नचाते हैं, वे स्वयं उनके आगे नृत्य करके सन्तुष्ट होते हैं तथा जिनका दूर से ही (परोक्षवाद द्वारा) वेदपाठीगण गुण-गान किया करते हैं, ऐसे नंदकिशोर जिनके समक्ष स्वयं गान किया करते हैं, आनन्दमग्न होकर मैं उन व्रजवधुओं की चरण-वंदना करता हूँ। 63।

मूल—वंशाननासक्तमुदारकर्मं बिम्बाधरद्वन्द्वमवेक्षितुं वा ।
कौतुहलाल्लोलतरं त्वदीयनेत्रद्वयं नाथ ! कदा नु बीक्षे ।। 64 ।।

मनोरथान्तरं कुरुते । हे नाथ श्रीकृष्ण त्वदीयं नेत्रद्वयं कदा नु कस्मिन् काले नु वीक्षे पश्यामि । कीदृशम् । लोलतरं अतिचपलं किं कर्तुमिव कौतूहलात् कार्यवैदग्ध्यमस्येति कौतुकात् बिंबाकारमधरद्वंद्वमवेक्षितुं वा दृष्टुमिव वा इवार्थे वर्ण्यमानविकल्पयोरिति वचनात् । तद्वीक्षितुमाकुलमिवेत्यर्थः । कीदृशं बिम्बाधरद्वन्द्वं वंशानने वेणुप्रधानरन्ध्रे आसक्त लग्नं । पुनः कीदृशम् । उदारकर्म उदारं महदुत्कृष्टं रागोत्थापनरूपं कर्म यस्य तत् । अन्योऽपि अधरो नीचैः स्थितोऽपि विशिष्टकर्मकर्त्ता चेदुच्चैः स्थितेनापि सारवद्विलोक्यत इति छायार्थः । उदारो दातृमहतोरित्यमरः । ।64।

अर्थ—वंशी के छिद्रों में संलग्न, उत्कृष्ट राग को उत्पन्न करते हुए बिम्बाफल

सदृश अधरों को कौतूहलपूर्वक देखने के लिए आकुल और अति चंचल आपके नेत्र-युगल को मैं कब देखूंगा। 64।

मूल— वंदे राधाम् ।। 65 ।।

"अतः परं वृत्तसंज्ञाक्षरसंख्याकृता भवे"दित्यनुसारेण एकाक्षरपादादारभ्य एकैकाक्षरवर्द्धितपादक्रमेण वृत्तजातिभेदेन श्लोकानुपनिबध्नन् प्रथमं श्रीराधां वन्दमानो मनोरथान् कुरुते। अहं राधां वन्दे प्रणमामि सकलविलासावधिभूतत्वात्। एकाक्षरं वृत्तम्। श्रीनाम छन्दः। गः श्रीरिति सूत्रं च। गुरुणा सिध्यति। मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्य्यः। जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः। इत्यष्टौ गणाः लघुर्गुरुश्च इत्यक्षरदशकमेव व्यवह्रियते छन्दोग्रन्थेषु तत्र ल इति लघोः सूचकः ग इति गुरोः तत्र गणास्तु वक्रसरलरेखाभिः प्रदर्श्यन्ते। म ऽऽऽ न ।।। भ ऽ।। य ।ऽऽ ज ।ऽ। र ऽ।ऽ स ।।ऽ त ऽऽ। इति लक्षणेन व्याख्यानं सर्वत्र बोद्धव्यं यावत्समाप्ति। 65।

अर्थ—श्रीराधा रानी की वन्दना करता हूँ। 65।

मूल— कृष्णे भूयात् बह्वी तृष्णा ।। 66 ।।

किं च। कृष्णे तृष्णा अभिलाषो भूयात् भवतु। कीदृशी। बह्वी गरीयसी इच्छांतरपिधायिकेत्यर्थः। द्व्यक्षरं वृत्तं स्त्री नाम छंदः। गौ स्त्री इति सूत्रं च। गुरुभ्यां सिद्ध्यति। 66।

अर्थ—श्रीकृष्ण में मेरी प्रगाढ़ तृष्णा बढ़े। 66।

मूल— राधायाः प्राणेशं ध्यायामो निर्बाधम् ।। 67 ।।

ननु किं कृष्णतृष्णया निरंतरं तच्चिंतनमेवेत्याशयेनाह। राधायाः प्राणेशं प्राणनाथं ध्यायामश्चिंतयामः। कथं निर्बाधं निर्विघ्नं यथा स्यात्तथा। त्र्यक्षरं वृत्तं नारी छंदः। मो नारीति सूत्रं च। मगणेन सिद्ध्यति। 67।

अर्थ—श्रीराधा के प्राणनाथ का मैं निर्विघ्न ध्यान करता रहूँ। 67।

मूल— सादरं वल्लभं राधिकाया भजे ।। 68 ।।

ननु किं निरंतरचिंतया तद्भजनमेवेत्याशयेनाह। अहं राधिकाया वल्लभं प्रियं

भजे। कथं सादरं श्रद्धाभरेणेत्यर्थः। द्व्यक्षरवृत्तस्यैव जात्यंतरं। मृगी छंदः। रो मृगीति सूत्रं च। रगणेन सिद्ध्यति। 68।

अर्थ—मैं श्रीराधावल्लभ लाल का श्रद्धा-सहित ध्यान करता हूँ। 68।

मूल— कोणेनाक्ष्णः पश्यन् राधाम्।
वंशी कृष्णश्चित्तं रुन्धे ॥ 69॥

ननु भजनीयांतरं कथं नालंब्यते तत्राह। कृष्णो मे चित्तं रुंधे आवृणोति वशीकरोतीत्यर्थः। कीदृशः। वंशो वेणुर्विद्यते यस्य सः। किं कुर्वन्। अक्ष्णः नयनस्य कोणेन प्रांतेन अपांगविलोकनेनेत्यर्थः। राधां पश्यन्। वेणुवादनपरोऽपि दृढानुरागेण तामेवावलोकयन्नित्यर्थः। चतुरक्षरं वृत्तं कन्या छंदः। मगौ चेत् कन्येति सूत्रं च। मगणेन गुरुणा च सिद्ध्यति। 69।

अर्थ—आँखों के कोनों से श्रीराधा को निहारते हुए वंशीधर श्रीकृष्ण ने मेरे चित्त को आवृत कर रक्खा है। 69।

मूल— भवतु मे बहुतरा। व्रजपतेः पदरुचिः ॥ 70॥

ननु ततः किमभिलषसीति चेत्तदाह। व्रजपतेः श्रीकृष्णस्य पदरुचिः चरणस्पृहा मे भवतु। कीदृशी। वहुतरा गरिष्ठा स्पृहांतरनिरासिकेत्यर्थः। चतुरक्षरवृत्तस्यैव जात्यंतरं तरणिजा छन्दः। नगपदा तरणिजेति सूत्रं। नगणेन गुरुणा च सिद्ध्यति। 70।

अर्थ—सांसारिक समस्त इच्छायें हट जायँ और नन्दनन्दन के ही एकमात्र चरण-कमलों में मेरी दृढ़ अभिलाषा उत्पन्न हो जाय। 70।

मूल— वंजुलकुंजे मंजुलहासम्।
ध्यायतु चेतः कृष्णविलासम् ॥ 71॥

ननु किं तच्चरणस्पृहया तद्विलासस्फूर्तिरित्याशयेनाह। मे चेतः कृष्णविलासं कृष्णक्रीडां ध्यायतु चिंतयतु। क्व वंजुलकुंजे वेतसकुंजे अशोकनिकुंजे वा। कीदृशं विलासं। मंजुलो मनोरमो हासो राधया सह नर्म यस्मिंस्तं। पंचाक्षरवृत्तं पंक्तिश्छंदः। भगौ गिति पंक्तिरिति सूत्रं च। भगणेन गुरुभ्यां च सिद्ध्यति। यथाभ्रपुष्पविदुलशीतवानीरवंजुलः। वकुलो वंजुलो ऽशोक इति चामरे। वंजुलस्योभयत्र न्यासः। 71।

अर्थ—हे मेरे मन! तू अशोक की कुंज में श्रीराधा रानी के साथ परिहास करते हुए श्रीलालजी के विलास का ध्यान कर। 71।

मूल— व्रजनागरं रससागरम्।
करुणं मनः स्मर संततम्॥ 72॥

किं च। हे मनस्त्वं व्रजनागरं व्रजे नन्दगोष्ठे यो नागरः सकलकलाविष्कारकस्तं निरंतरं स्मर चिंतय। कीदृशं। रससागरं स्नेहसिंधुं। यद्वा। रसाः शृंगारादयस्तेषां सिंधुं तदधिष्ठानत्वात्। त्वयि सर्वरसे इति श्रुतिवचनं च। पुनः कीदृशं। करुणं दयालुं। अल्पस्मरणेऽपि भूर्य्यनुग्राहकमित्यर्थः। पञ्चाक्षरे वृत्ते जात्यंतरं प्रिया नाम छन्दः। सलगैः प्रियेति सूत्रं। सगणेन लघुगुरुभ्यां च सिद्ध्यति। 72।

अर्थ—रे मन! रस के अधिष्ठान, व्रज के नागर, करुणाकर श्रीनन्दनन्दन का निरंतर स्मरण कर। 72।

मूल— तन्वन्ति सुखानि प्रेयांसि रसज्ञाः।
गायन्ति सरागं कृष्णस्य कृतानि॥ 73॥

एतत्सदाचारेण दृढयति। रसज्ञा रसवेदिनो ये ते कृष्णस्य कृतानि कर्माणि सरागं सप्रेम गायंति। न तु गानेन किंचिदपेक्षास्तदेकपुरुषार्थत्वात्। कीदृशानि सुखानि तन्वन्ति कुर्वन्ति सुखमयत्वात्। पुनः कीदृशानि प्रेयांसि। अतिप्रीतिविषयाणि। षडक्षरं वृत्तं। तनुमध्या छन्दः। त्यौ चेत्तनुमध्येति सूत्रं। तगणयगणाभ्यां सिद्ध्यति। 73।

अर्थ—रसिक जन नन्दनन्दन के लीला-चरित्रों का प्रेम-सहित गान करते रहते हैं और अतिप्रिय इन्हीं लीलाओं के द्वारा भजन-सुख का विस्तार किया करते हैं। 73।

मूल— विधुवदनाया रुचिरकपोले।
कमपि लिखन्तं भज दलपालिम्॥ 74॥

अन्यमप्युपदिशति॥ हे श्रोतृजन कमपि अतर्क्यं त्वं भज आश्रय। किं कुर्वंतं विधुवदनायाश्चंद्रमुख्या रुचिरकपोले रम्यगण्डस्थले दलपालिं पत्रावलिं लिखंतं

रचयंतं । जात्यंतरं शशिवदना छन्दः । शशिवदना न्याविति सूत्रं । नगणयगणाभ्यां सिद्ध्यति । 74 ।

अर्थः—शशिमुखी श्रीराधा के रुचिर कपोलों पर पत्रावली की रचना करते हुए उनके अनिर्वचनीय प्राणनाथ का आश्रय ग्रहण करो । 74 ।

मूल— यदीयैर्यशोभिस्ततं विश्वमेतत् ।
स्फुरत्वंतरे राधिकाप्राणनाथः ॥ 75 ॥

तस्मिन्नेव रतिमर्थयते । राधिकाप्राणनाथः श्रीकृष्णः अन्तरे अभ्यंतरे हृदीति यावत्स्फुरतु गोचरीभवतु । कीदृशः । यदीयैर्यशोभिः । यस्य कीर्तिभिरेतद्विश्वं ततं व्याप्तं नानाभेदैर्गीयमानत्वात् । विश्वे प्रकटोऽपि हृदि प्रीत्यैव प्रकटीभवतीति भावः । जात्यंतरं सोमराजी छंदः । द्विया सोमराजीति सूत्रं । यगणद्वयेन सिद्ध्यति । 75 ।

अर्थ—अनेक प्रकार से गान करने के कारण जिनकी कीर्ति त्रिभुवनव्यापिनी है, ऐसे श्रीराधा के प्राणनाथ मेरे हृदय में प्रकाशित हों । 75 ।

मूल— जलधरवपुषं क्षणरुचिवसनम् ।
स्मितललितमुखं स्मर हृदय हरिम् ॥ 76 ॥

ननु हृदि प्रकटनेन किं संपत्स्यते तच्चिंतनमेवेत्याशयेनाह । हे हृदय हरिं स्मर अनुसंधेहि । कीदृशं । जलधरवपुषं सजल-मेघशरीरं । पुनः कीदृशं । क्षणरुचिर्विद्यु-त्तद्वद्वसनं यस्य तं । पुनः कीदृशं । स्मितेन मंदहसनेन ललितं रमणीयं मुखं यस्य तं । सप्ताक्षरवृत्तं मधुमती छंदः । ननगि मधुमतीति सूत्रं । नगणद्वयेन गुरुणा च सिद्ध्यति । 76 ।

अर्थ—जल से भरे हुए बादल के समान है श्रीअंग जिनका, बिजली के सदृश पीताम्बर धारण किए हुए, मुस्कान से (और भी) रमणीय हो उठा है मुख कमल जिनका, ओ मेरे मन! तू ऐसे सुन्दर श्याम का स्मरण कर और सब कुछ भूल जा । 76 ।

मूल— समस्तविषयाणां रसानुगतचेताः ।
अहं खलु कृपाब्धे तथापि तव दासः ॥ 77 ॥

ननु विषयदूषितं मनः कथं स्मरिष्यति तत्राह । हे कृपाब्धे करुणासिंधो ! अहं

यद्यपि समस्तविषयाणां शब्दादीनां रस आस्वादस्तमनुगतं चेतो यस्य स तादृशोऽस्मि तथापि खलु निश्चितं तव दासः अनुवर्ती। अनुवर्तिमात्रे मयि तव कारुण्यस्वभावात्सर्वं संगच्छेतैवेति। न हि त्वत्स्मरणे मनसो निर्विषयत्वं सविषयत्वं वा हेतुः किंतु त्वदनुकम्पैव तया त्वज्जनत्वे सिद्धे सर्वं त्वत्परमेव भवतीति तात्पर्यम्। उक्तं च दशमे ब्रह्मणा। तावद्रागादयः स्तेनास्तावत्कारागृहं गृहं। तावन्मोहाङ्घ्रनिगडो यावत्कृष्ण न ते जना इति। जात्यंतरं कुमारललिता छन्दः। कुमारललिता ज्सगा इति सूत्रं। जगणसगणाभ्यां गुरुणा च सिद्ध्यति। 77।

अर्थ—सांसारिक विषयों से दूषित यह मन भला कैसे आप की इस रूप-राशि को हृदयंगम कर सकता है। यहाँ पर कहते हैं—हे कृपा-सागर! मेरा मन तो समस्त विषयों के रसों के पीछे-पीछे दौड़ता रहता है, किन्तु अपने दासों पर कृपा करना आपका स्वभाव है, और मैं फिर भी (निश्चित रूप से) एक दास हूँ। 77।

मूल— भूयात्क्वापि दशा नो विद्मो नैव विशेषम्।
गौरश्यामलदेहौ प्राणेशौ मनसि स्ताम्॥ 78॥

तदेव स्पष्टयति। नोऽस्माकं कापि सविषया निर्विषयादिरूपा दशा अवस्था भूयात् भवतु तत्र विशेषं समीचीनासमीचीनत्वभेदं वयं नैव विद्मः नैव जानीमः। किन्तु प्राणेशौ प्राणनाथौ मनसि स्तां वर्त्तेतां। कीदृशौ। गौरं च श्यामलं च देहं ययोस्तौ राधाकृष्णावित्यर्थः। जात्यंतरं मदलेखा छन्दः। स्यान्मस्गा मदलेखा इति सूत्रं। मगण सगणाभ्यां गुरुणा च सिद्ध्यति। 78।

अर्थ—मेरी कोई भी दशा (निर्विशेष या सविशेष) बनी रहे, इन दोनों में कौन सी उत्तम है, यह भी मैं नहीं जानता। केवल यही चाहता हूँ कि गौर और साँवले मेरे दोनों प्राणनाथ हृदयगोचर होते रहें। 78।

मूल— प्राणसमाकुचकुम्भौ चंचलहस्तसरोजः।
हारलताछलतो मामुत्कलयन् हरिरव्यात्॥ 79॥

क्रीडाविशेषं स्मरन् प्रार्थयते। हरिर्मामव्यात् रक्षतु आत्मसात्करोत्वित्यर्थः। किं कुर्वन् प्राणसमायाः श्रीराधायाः कुचकुम्भौ स्तनकलसौ उत्कलयन् मृद्नन्। कथं हारलताछलतः मौक्तिकमालास्पर्शनव्याजेन। कीदृशः। चंचलहस्तसरोजः पुनः पुनः सारणेन चपलकरकमलः। अष्टाक्षरवृत्तं चित्रपदा छंदः। चित्रपदा यदि भौ गौ इति सूत्रम्। भगणद्वयेन गुरुभ्यां च सिद्ध्यति।79।

अर्थ—चंचल कर-कमलों के द्वारा प्राणप्रिया श्रीराधा के स्तन-कलशों को

हारावली छूने के बहाने उत्कंठित करते हुए नन्दनन्दन मेरी भवताप से रक्षा करें। 79।

मूल— राधिकया संवलितं रोमकुलैः क्रान्ततनुम् ।
कुंजगृहे प्रीतमुखं ध्याय मनः कृष्णविभुम् ।। 80 ।।

**तत्रैव मनोवृत्तिमिच्छन्नाह। हे मनः ! कृष्णविभुं ध्याय चिंतय। क्व । कुंजगृहे लतामंदिरे। कीदृशं। राधिकया सम्वलितं संयुक्तं। पुनः कीदृशं। रोमकुलैः रोमवृंदैः क्रांततनुं व्याप्तशरीरं । तदंगसंगेन रोमांचितमित्यर्थः । पुनः कीदृशं । प्रीतमुखं प्रसन्नवदनं तदवलोकनात् । जात्यंतरं माणवकछन्दः। भात्तलगा माणवकमिति सूत्रं। भगणतगणाभ्यां लघुगुरुभ्यां च सिद्ध्यति। ८०।**

अर्थ—लता-मन्दिर में श्रीवृषभानुदुलारी के साहचर्य से रोमांचित हो रहा है गात्र जिनका, ऐसे प्रसन्नवदन लालजी का ए मेरे मन! तू ध्यान कर। 80 ।

मूल— श्रीकृष्णांके भान्ती यद्वन्मध्येमेघं विद्युन्माला।
भूयो भूयोऽस्माभिर्गौरी ध्यातव्यालं काचिद्बाला ।। 81 ।।

**ध्यानान्तरं । काचित् अतर्क्या बाला किशोरी अस्माभिर्भूयो भूयः वारं-वारं तत्रापि अलं अत्यर्थं चिंतांतरच्छेदेनेत्यर्थः। ध्यातव्या ध्येया। कीदृशी। गौरी गौरवर्णा। पुनः कीदृशी। श्रीकृष्णांके श्रीकृष्णस्य आक्रोडे भांती शोभमाना। कथं यद्वद्। यथा मध्येमेघं मेघस्य मध्ये विद्युन्माला तडिल्लेखा भाति तथा। जात्यंतरं विद्युन्माला छन्दः। मो मो गो गो विद्युन्मालेति सूत्रं। मगणद्वयेन गुरुभ्यां च सिद्ध्यति। ८१।**

अर्थ—सजल मेथ के मध्य चमकती हुई बिजली की भाँति श्यामलाल की गोद में शोभायमान किसी अनिर्वचनीय गोरी बाला का समस्त चिन्ताओं को त्यागकर ध्यान करना चाहिए। 81।

मूल— यर्हि राधिकाधवस्य पादभक्तिमन्तरेण।
ईहते वरं नरस्य मातृगर्भविक्षतिरस्तु ।। 82 ।।

**ननु प्रत्यक्षविषयसुखभोगवैमुख्येनातिदुर्ल्लभमनोरथैः कथं आन्दोल्यते मनस्तत्राह। यर्हि यदा राधिकाधवस्य राधापतेः पादभक्तिमंतरेण विना इह ते मनः विषयसुखे चेष्टते तदा नरस्य ईहनात् मातृगर्भविक्षतिः मातृगर्भे जठरे एव विनाशः। स्रावपतनादिना गलनं तु वरं श्रेष्ठं सकलसाधनक्षमाविकलेन्द्रिसम्पन्नवपुर्वैयर्थ्य-**

**पश्चात्तापाभावात् । जात्यंतरं समानिका छंदः । ग्लौ रजौ समानिका त्वितिसूत्रं । गुरुलघुभ्यां रगणजगणाभ्यां च सिद्ध्यति । 82 ।**

अर्थ––जिस मनुष्य की श्रीराधावर के चरण-कमलों में भक्ति न होकर जगत् के विषयों में ही चेष्टा रहती हो, ऐसी स्थिति में तो यही अच्छा है कि उसकी माता का गर्भ ही नष्ट हो जाय । 82 ।

मूल––

सदातनारविन्दिनी सदैव कृष्णवल्लभा ।।
सदासमाधिका जनं सदा पुनातु भानुजा ।। 83 ।।

**अभक्तं निंदित्वेदानीं स्वयं भक्तिप्रतिबंधकनाशं यमुनामर्थयते । भानुजा श्रीयमुना जनं मां अन्यं वा सदा पुनातु पवित्रयतु भक्तिप्रतिबन्धकं नाशयत्वित्यर्थः । ननु किं सामर्थ्यं तत्राह । सदैव सर्वस्मिन् काले कृष्णवल्लभा कृष्णस्य प्रिया । पुनः कीदृशी । सदातना नित्यं शिष्यते रविसुता तत्रेति पुराणवचनात् । पुनः कीदृशी । अरविन्दिनी अरविंदानि कमलानि विद्यन्ते यस्यां सा । पुनः कीदृशी । सदा सर्वकाले असमाधिका नसमं अधिकं च यस्याः सा सर्वोत्तमेत्यर्थः । यद्वा । भानुः श्रीवृषभानुस्ततो जायते या सा भानुजा श्रीराधा अरविंदिनी लीलाकमलयुक्ता अन्यत्समानम् । जात्यंतरं प्रमाणिका छंदः । प्रमाणिका जरौ लगाविति सूत्रं । जगणरगणाभ्यां लघुगुरुभ्यां च सिद्ध्यति । 83 ।**

अर्थ––श्रीयमुना जी से प्रार्थना करते हैं––सदैव नन्दनन्दन की प्यारी, नित्य रूप से प्रवाहित रहने वाली, कमलों से अपना शृंगार किये हुए, सर्वदा सर्वोत्तम श्रीभानुजा सब समय हम सबको पवित्र करती रहे । 83 ।

मूल––

मदकरिललितक्रीडो युवतिगणवृतः पायात् ।
रविदुहितृतटे रम्ये घनविपिननिवासी माम् ।। 84 ।।

**तदंतिकक्रीडापरं श्रीकृष्णमर्थयते । रम्ये रमणीये रविदुहितृतटे यमुनातीरे घनविपिननिवासी घने निविडे विपिने श्रीवृन्दावने निवसितुं शीलमस्य सः श्रीकृष्णः मां पायात् । आत्मीयं करोतु । कीदृशः । मदकरिललितक्रीडः मदयुक्तो यः करी गजस्तस्येव ललिता मनोरमा क्रीडा विहरणं यस्य सः । वनविहारित्वगतिसौष्ठवयुवतिवशत्वनिर्भयत्वादिसाधर्म्यात् । पुनः कीदृशः । युवतिगणवृतस्तरुणीसमूहवेष्टितः । नवाक्षरं वृत्तं भुजगशिशुभृता छंदः । भुजगशिशुभृता नौ म इति सूत्रं । नगणद्वयेन मगणेन च सिद्ध्यति । सृतेति शंभुप्रभृतिषु प्रभृत्येत्याधुनिकाः पठंति । 84 ।**

अर्थ—मदभरे गज के समान विहार में निरत, अनंत सखि-समूहों से घिरे हुए, यमुना के सुरम्य तट पर निविड़ रस-स्वरूप श्रीवृन्दावन के वासी श्याम मुझे अपना बना लें। 84।

मूल— प्राणसमावक्षोजगतः श्याममणीनां कांतिहरः।
रंजयतान्नित्यं स युवा कुंजगृहे मे नेत्रयुगम् ।। 85 ।।

ननु किं तस्यात्मीयत्वेन तल्लीलादर्शनयोग्यतेति द्योतयन्मनोरथं कुरुते । स युवा तरुणो मे नेत्रयुगं नित्यं रंजयतात् रंजयतु गोचरीभावेन सुखयत्वित्यर्थः। क्व कुंजगृहे निकुंजमंदिरे। कीदृशः। प्राणसमावक्षोजगतः श्रीराधाकुचद्वयप्राप्तः। तयालिङ्गित-त्वात्। पुनः कीदृशः। श्याममणीनां नीलरत्नानाम् कान्तिहरः दीप्तिचौरः यद्वा गौरकुचपरिसरे नीलमणिहारशोभाकर्त्तेत्यर्थः। जात्यंतरं मणिमध्या छंदः। स्यान्मणिमध्या चेद्भ्रमसा इति सूत्रं। भगणमगणाभ्यां सगणेन च सिद्ध्यति। 85।

अर्थ—आत्मीयता मिलने पर लीला-दर्शन की योग्यता आयेगी। निकुंज-मन्दिर में प्राणप्रिया श्रीराधा से आलिंगित होकर श्याममणियों की दीप्ति को चुराकर गौर वपु पर नीलमणि के समान सुशोभित नवलकिशोर मेरी आंखों के सामने रहकर मुझे सुखी करें। 85।

मूल— तरलैः कृपाविलोकितैर्मुरलीनिनादविभ्रमैः।
अवलोकयेदहो कथं वृषभानुजापतिः स माम् ।। 86 ।।

दर्शनानंतरं तद्विलोकनपात्रतामात्मनोऽपीच्छति। स वृषभानुजापतिः श्रीराधा-कान्तः कृपाविलोकितैः करुणावलोकनैः मां अहो हर्षे कथं केन प्रकारेण अवलोकयेत् पश्येत्। कीदृशैस्तरलैर्लोलैः। पुनः कीदृशैः मुरलीनिनादविभ्रमैः वेणुनादविलास-युक्तैः। जात्यंतरं भुजगसंगता छंदः। सजरैर्भुजगसंगतेति सूत्रं। सगणजगणाभ्यां रगणेन च सिद्ध्यति। 86।

अर्थ—राधाकांत अपनी चंचल एवं वेणु-नाद की मधुरता में खोई हुई करुणा-दृष्टि से अहो! मुझे कब देखेंगे। 86।

मूल—व्रल्लवनारीणां भुजबद्धं योगिजनानां चेतसि दूरम्।
रासविलासे तं विलसन्तं कृष्णविभुं वन्दे रसपूरम् ।। 87 ।।

ननु तद्विलोकनपात्रता कथं संपद्येत तत्प्रेम्णैवेत्याशयेन तस्य स्नेहवशतां दर्शयन्

वंदते । अहं तं कृष्णविभुं वंदे नमस्करोमि । कीदृशं । रासविलासे रासक्रीडायां विलसंतं क्रीडंतं विराजमानं वा । पुनः कीदृशं । बल्लवनारीणां गोपस्त्रीणां भुजैर्बाहुभिर्बद्धं आवृतं । मंडले प्रत्येकं रूपतयोभयतस्तद्बाहुलतालिंगितकंठत्वात् । पुनः कीदृशं । योगिजनानां चेतसि मनसि प्रत्यग्दृष्टेरपि दूरं वर्तमानमगोचरमित्यर्थः । पुनः कीदृशं । रसपूरं रसः स्नेहस्तं पूरयति पुष्णातीति तस्य प्रवाहरूपो वा तं । यद्वा श्रृंगारादिरसप्रवाहरूपं अतो नीरसेन योगिनां मनसापि नालिंगितमिति भावः । रासो बहुनर्तकीसाध्यो नृत्यविशेषो भरतेनोद्दिष्टमात्रोऽन्यैर्दुष्करः श्रीकृष्णेनानुष्ठितः आगमे तस्य प्रक्रियेयं सूचिता । पृथ्व्यां कीलकस्तदुपरिमणिहाटकसंबद्धं विशालं चक्रं तदुपर्यरदलं तत्समानं कमलं चतुरंगुलोन्नतं तदुपरियुगपदाक्रमणेन कर्णिकायां स्थितेन परितो बल्लवीमंडलेन च सता श्रीकृष्णेन तद्भ्रामणपूर्वकं समकालगानं विचित्रं नृत्यमनुष्ठितमिति । जात्यंतरं । रुक्मवती छंदः । क्वचिद्रूपवती । क्वचिच्चंपकमालेयमेव । भामसगा स्याद्रुक्मवतीयमिति सूत्रं । भगणमगणसगणैर्गुरुणा च सिद्ध्यति । 87 ।

अर्थ—रासलीला में विराजमान, गोप-नारियों की बाहुलताओं में आबद्ध, योगियों के मन से अगोचर रसपूर्ण श्रीनन्दनन्दन की मैं वन्दना करता हूँ । 87 ।

मूल— राधाकृष्णप्रणयपराणां,
तद्गाथाभिः सफलितवाचाम् ।
रोमोत्थानैर्विषमतनूनां,
पादाम्भोजे भवतु रतिर्मे ।। 88 ।।

ननु प्रेमैकलभ्यत्वमुक्तं श्रीकृष्णस्य तत्सत्यं प्रेम तु कथं लभ्यत इत्याशयेनाह । तेषां पादांभोजे मम रतिः प्रीतिर्भवतु । केषां । राधाकृष्णयोः प्रणयः प्रेमा स एवं परः पराकाष्ठा येषां । तल्लक्षणं तद्गाथाभिस्तद्वार्त्ताभिः सफलिताः । फलवत्यः कृता वाचो यैस्तेषां । पुनः कीदृशानां । रोमोत्थानै रोमोद्गमैर्विषमा कंटकिता तनुर्येषां ते । तत्पादरत्यैव प्रेम नान्यथेति भावः । जात्यंतरं मत्ता छंदः । ज्ञेया मत्ता मभसगसृष्टेति सूत्रं । मगणभगणसगणै र्गुरुणा च सिद्ध्यति । 88 ।

अर्थ—जो युगल प्रेम में सदैव छके रहते हैं, जिन्होंने उनकी लीला गान करते हुए अपनी वाणी सफल की है और जिनके अंग उनकी कथा का स्मरण करके सदा पुलकित बने रहते हैं, ऐसे रसिकों के चरणकमलों में मेरी रति होवे । 88 ।

मूल— अगतिगतिर्विमलरतिर्हृदयपतिर्भवितततिः ।
बहलकृपः सकलनृपः किमु दधते तमसुतृपः ।। 89 ।।

व्यतिरेके भजनाभावमाह। असून् प्राणानेव तर्पयंति तेऽसुतृपः इन्द्रियारामास्तं हरिं किमु दधते किं धारयंति। अपितु न जानंतीत्यर्थः। स कीदृशः। यः अगतिगतिः अगतीनां लोके गतिरहितानां चांडालादीनामपि गतिर्गम्यः प्राप्यः न तु लोकवत्तिरस्कर्त्तेत्यर्थः। तत् कुतः। विमलरतिः। विमला निर्दोषा रतिर्यस्य। देशकालाधिकारिनियमादिमलाभावात्। यद्वा। विमलानां शुद्धानामेव रतिर्यस्य सः अतो भगवद्रत्यैव विप्रादिचांडालां तेषु शुद्धिरनुमेया नान्यथेति भावः। यद्वा। विमलेषु शुद्धांतःकरणेषु भक्तेष्वेव रतिः प्रीतिर्यस्य सः। ननु वचोविवेकप्रदर्शितात्मशुद्धिषु बहुषु कस्यचित्कथमंतःशुद्धिं ज्ञास्यतीति। तत्राह। हृदयपतिः सर्वान्तःकरणसाक्षी। ननु किं तद्रत्या तत्राह। भविकततिः भविकानां सर्वमंगलानां ततिः परम्परा तद्रूपः सर्वमंगलैकविग्रह इत्यर्थः। अतस्तद्रतिरेव परमपुरुषार्थ इति भावः। ननु यदि केनचित्संकोचेन रतिं न कुर्य्यात्तत्राह बहलकृपः अत्यंतकरुणः। कारुण्यस्वभावान्न तस्य कश्चित्संकोच इत्यर्थः। ननु तस्य रत्या यदि कश्चिदन्यः स्पर्द्धेत तत्राह। सकलनृपः। ब्रह्मरुद्रादीनां नियंता तत्तुष्टौ सर्वतुष्टिरित्यर्थः। जात्यंतरं त्वरितगतिश्छंदः। त्वरितगतिस्तु नजनगैरिति सूत्रं। नगणजगणनगणैर्गुरुणा च सिद्ध्यति। ८९।

अर्थ—जिनकी कोई गति नहीं है, उनकी गति, देश, काल, पात्रादि न देखकर प्राणी मात्र के विशुद्ध प्रेमी, सभी के अन्तःसाक्षी, सबके लिए मंगलकारी, सहज कृपालु, ब्रह्मादिकों के नियन्ता प्रभु को जगत् के मिथ्या-विषयों में लीन रहने वाले भोगी पुरुष भला कैसे जान सकते हैं। ८९।

मूल—युवतिमंडले विलासिनं सकलनृत्यगीतपण्डितम्।
सरसरासकेलिचंचुरं स्मर मनः कलानिधिं हरिम् ॥90॥

प्रस्तुतमनुस्मरति। हे मनः हरिं स्मर। कीदृशं। युवतिमंडले विलासिनं क्रीडनशीलं। पुनः कीदृशं। कलानिधिं सकलकलाधिष्ठानं। पुनः कीदृशं। सरसा रसविशेषैः सहिता या रासकेलिः तस्यां चंचुरो निपुणस्तं। कुतः सकलनृत्यगीतपंडितं। सकलं कलाभिः सहितं सांगमिति यावत् तादृशे नृत्यगीते च पंडितं विदग्धं। तत्र सरसविरसभेदेन द्वैधाभूते नृत्ये सात्त्विकांगिकक्रियासम्पन्नाभिनयलग्नकभ्रमरिकानिःशंकादिकाः क्रमेण बहुविधाः कलाः। गीते तु स्वरभेदग्राममूर्च्छनाश्रुतितानादिका इति विवेकः। जात्यंतरं मनोरमा छंदः। नरजगैर्मनोरमा भवेदिति सूत्रं। नगणेन रगणेन जगणेन गुरुणा च सिद्ध्यति। 90।

अर्थ—हे मेरे मन! तू सखियों के परिकर में विलास करने वाले, नृत्य और संगीत के मर्मज्ञ, सरस-रास-क्रीड़ा में निपुण, कलानिधि नन्दनन्दन का स्मरण कर। 90।

मूल--आः कुत्र नानारुचि लोकरागः क्व ते स्वयंभ्वादिदुरूहभक्तिः ।
आद्यादनुक्रोशतयापकृष्य मां प्राणनाथ स्वजनं विधत्स्व ।।91।।

श्रीकृष्णे मनोनिवेशनस्य लोकानुरंजनं महानंतरायः । स तु तत्कृपयैव निवर्तेतेत्याशयेन तमेव प्रार्थयते । आः कष्टं किं तदित्याह । नाना अनेकविधा रुचिः स्पृहा यस्य तस्य लोकस्य रागो रंजन कुत्र ते तव स्वयंभूः ब्रह्मा तदादीनां दुरूहा दुर्बोधा चासौ भक्तिः क्व महीयान् विरोध इत्यर्थः । अतः हे प्राणनाथ । अनेन ममांतरीणालोचनवृत्तिं त्वं जानासीति सूचितं । आद्यात् लोकानुरंजनात् । अनुक्रोशतया कारुण्येन अपकृष्य पृथक्कृत्वा मां स्वजनं आत्मसेवकं विधत्स्व कुरुष्व । त्वत्कृपां विना न लोकाद्यनुरोधांतरायनिवृत्तिरिति तात्पर्यं । उक्तं च श्रीभागवते । यदा यस्यानुगृह्णाति भगवानात्मभावितः । स जहाति मतिं लोके वेदे च परिनिष्ठितामिति । एकादशाक्षरं वृत्तं । इन्द्रवज्रा छन्दः । स्यादिन्द्रवज्रा ततजैर्गुरुभ्यामिति सूत्रं । तगणद्वयेन जगणेन गुरुभ्यां च सिद्ध्यति । 91 ।

अर्थ--अरे! कहाँ अनेक-इच्छामूलक इस जगत् का प्रेम और कहाँ ब्रह्मादि के लिए अगम्य आपकी भक्ति ! हे प्राणेश्वर ! आप मुझे अपना बना लेने की कृपा कीजिए । 91 ।

मूल--यदा दृशौ मन्मथचिक्कणे ते विभोऽतिलोले मधुपायमाणे ।
हितासुतामुग्धमुखारविंदे स्मरामि तेनाहमथावनीशः ।। 92 ।।

ननु मज्जनतया किमभिलष्यते तत्राह । हे विभो श्रीकृष्ण यदा ते तव दृशौ नेत्रे स्मरामि चिंतयामि तदा तेन तावतैव अहमवनीशः राजा । लोकोक्त्यनुकरणमेतत् । परमसुखीत्यर्थः । कीदृश्यौ दृशौ मन्मथचिक्कणे कामरसेन स्निग्धे । पुनः कीदृशौ । अतिलोले चपलतरे तत्र हेतुः । हितासुतामुग्धमुखारविंदे । हितासुतायाः श्रीराधायाः सुन्दरमुखकमले मधुपायमाने भ्रमरवदाचरंत्यौ तद्दर्शनलोलुपे इत्यर्थः । हितानाम्नी श्रीवृषभानुस्त्रीति केचित् । कीर्तिदा इति तस्या नामांतरं वदन्ति । उक्तं च । वृषभानुः पिता तस्या वृषभानुरिवोज्वलः । रत्नगर्भा क्षितौ ख्याता जननी कीर्तिदाख्ययेति । तत्र हितेति पितुर्गृहे नाम कीर्तिदेति श्वशुरगृह इति विवेकः । जात्यंतरं, उपेन्द्रवज्रा छंदः । उपेन्द्रवज्रा प्रथमे लघौ सेति । सैव इंद्रवज्रा प्रथमेऽक्षरे लघुनि इयं सिद्ध्यति । 92 ।

अर्थ--हे नन्दनन्दन! प्रेम-रस से स्निग्ध एवं श्रीराधारानी के सुन्दर मुखकमल के सौन्दर्य-मधु का भ्रमर बन कर पान करते हुए आपके अत्यन्त चंचल नेत्रों

का जब-जब मैं ध्यान करता हूँ तब-तब अपने को अवनीश की भाँति परम सुखी मानता हूँ। 92।

मूल—नीलाश्मरुक्मच्छविचारुमूर्ती निरन्तरं प्रेमनिबद्धभावौ।
प्रसूनतल्पेऽतिविषज्य सुप्तौ ध्यायामि कुंजे निजजीवितेशौ ॥93॥

किं च। निजजीवितेशौ स्वप्राणनाथौ ध्यायामि। क्व कुंजे। कीदृशौ। नीलाश्मा नीलमणिः, रुक्मं सुवर्णं तयोश्छविरिव छविर्ययोस्ते चारु रमणीये मूर्ती विग्रहौ ययोस्तौ। पुनः कीदृशौ। प्रसूनतल्पे पुष्पशय्यायां। अतिविषज्य निरंतरं मिलित्वा सुप्तौ शयितौ। न केवलं बहिरेव किं तु निरंतरो निश्छिद्रो यः प्रेमा गाढस्नेह इत्यर्थस्तेन निबद्धो ग्रथितो भावो भावना ययोस्तौ। एषा उपजातिः। इंद्रवज्रोपेंद्रवज्राविमिश्रितपादाभ्यां सिद्ध्यति। 93।

अर्थ—नीलमणि की सी अंगकान्ति से युक्त श्याम और कांचन-गौरांगी श्रीराधा आन्तरिक प्रेम से आबद्ध कुंज-मन्दिर में पुष्प-शय्या पर सम्मिलित रूप से शयन करते हुए अपने प्राणनाथों का ध्यान करता हूँ। 93।

मूल—इदमिदमद्भुतपुष्पदलं मुहुरिति राधिकयाभिहितः।
अवचिनु तत्त्वमितिच्छलनादवतु स वः परिरब्धतनुः॥ 94॥

विलासांतरं स्मरन् अन्येषामपि हितमिच्छति। स श्रीकृष्णो वः युष्मानवतु रक्षतु स्वभक्तान् संपादयत्वित्यर्थः। कीदृशः। राधिकया मुहुः प्रतिक्षणं इति अभिहित उक्तः। इतीति किम्। पुष्पं च दलं च तत्पुष्पदलं अद्भुतं च तत्पुष्पदलं इदमिदं। पुनः कीदृशः। इति छलनात्तदर्थोन्नमनव्याजेन परिरब्धा आलिंगिता तनुः सैव तन्वंगी येन सः। इतीति किं तत् स्वाभिलषितं पुष्पदलं त्वमेव अवचिनु त्रोटयेति। सुमुखीछन्दः। नजजलगैः सुमुखी कथितेति सूत्रम्। नगणेन जगणद्वयेन लघुगुरुभ्यां च सिद्ध्यति। 94।

अर्थ—एक दिन श्रीवृषभानुनंदिनी उत्सुक होकर श्रीलालजी से बोलीं—कुंज-मंदिर की लता का यह पुष्पदल अतिविचित्र है। लालजी ने प्रियाजी को उस ऊंचे फूल को तोड़ने के लिए प्रेरित करते हुए ऊपर उठाने की चेष्टा में उनका परिरम्भण किया। ऐसे श्यामसुन्दर आप सबकी रक्षा करें। 94।

मूल—सारं सारं सर्वशास्त्रे तदेतद्वारं वारं कृष्णलीलानुचिन्त्या।
हेयं हेयं सर्वशश्चैतदेव ज्ञेयं ज्ञेयं सर्वथा तद्विकूलम्॥ 95॥

नन्वात्मनः सर्वेषां च कथमिदमेव श्रेयो निश्चितं शास्त्रेषु तेषां विगीतत्वादित्यत आह । सर्वशास्त्रे यत्सारं सारतत्त्वं तदेतदेव । किं तत् । वारं-वारं प्रतिक्षणं कृष्ण-लीलानुचिंत्येति । हेयं-हेयं त्याज्यं-त्याज्यं च सर्वशः सर्वत्र सर्वथा सर्वात्मना एतदेव ज्ञेयं ज्ञातव्यं ज्ञातव्यं किं तद्विकूलं लीलानुचिंतनबाधकं यत् अतो लीलानुचिंतनमेव पुरुषार्थ इत्यर्थः। शालिनी छंदः। मात्तौ गौ चेच्छालिनी वेदलोकैरिति सूत्रम्। मगणेन तगणद्वयेन गुरुभ्यां च सिद्ध्यति । वेदाश्चत्वारः लोकाः सप्त तावदक्षरैर्जिह्विका-विश्रामः। 95।

अर्थ—समस्त शास्त्रों का यही सार है कि बार-बार श्रीकृष्ण-लीला का चिंतन करना चाहिये और इसके विरोधी तत्त्वों को छोड़ देना चाहिये। 95।

मूल— भीतो नाहं भवतः कल्पमानात्
प्रीतो नाहं मुक्तिपदावाप्तेः।
प्रीतो राधाभिमतस्यांघ्रिभक्ते-
र्भीताद्भीतः खलु तत्रावमानात् ॥ 96॥

ननु क्लेशावहजन्ममरणादिभयेन तन्निवृत्तिमेव तत्त्वं मन्यमानाः सर्वे साधनेषु प्रवर्तन्ते । कथमन्यथा तत्त्वमुच्यते तत्राह । अहं भवतः जन्मनः उपलक्षणमेतत् । न भीतः न त्रस्तः । कीदृशात् । कल्पमानात् कल्पः प्रलयावधिः कालस्तदेव मानं मितिर्यस्य तस्मात् तत्पर्यंन्तादित्यर्थः । किं च । आमुक्ति मुक्तिमभिव्याप्य पदानां स्थानानामवाप्तेः प्राप्तेर्हेतोर्न प्रीतः न च प्रसन्नः । ननु कुत्र तर्हि प्रीतत्वादि । तत्राह प्रीत इति राधयाऽभिमतस्य । प्रियस्य अंघ्रिभक्तेश्चरणभजनात् प्रीतस्तत्र अंघ्रि-भक्तौ यो ऽवमानः अनादरः सदपराधादिकृतस्तस्मात्। खलु निश्चितं भीतादपि भीतः। अत्यंतं भीत इत्यर्थः। तेन सकलश्रेयोह्रासात् श्रीशुकोक्तौ च । हंति श्रेयांसि सर्वाणि पुंसो महदतिक्रम इति अतो यस्य यदभीष्टं तत् प्राप्तिबाधयोरेव तस्य प्रसादभये पर्यवस्येते इति भावः । वातोर्मी छन्दः । वातोर्मीयं गदिता म्भौतगौ ग इति सूत्रं । मगण भगण तगणैर्गुरुभ्यां च सिद्ध्यति। 96।

अर्थ—कल्पपर्यन्त होने वाले जन्मादिकों से मुझे भय नहीं है। इसी प्रकार मुक्ति भी मुझे प्रिय नहीं। राधारानी के पाद-पद्मों में मेरी रति हो, यही चाहता हूँ। इस रति को मैं कम महत्त्व न देने लगूं, इस बात से अवश्य डरता हूँ। 96।

मूल— मिथ्याभोगे रुचिरपि यदि ते
तत्राऽऽश्चर्यं न किमपि धिषणे ।
कृष्णे प्रीतिं क्षणमपि कुरुषे-
ऽतर्क्यं मन्ये तदिह तु भविकम् ॥ 97॥

नन्वाश्चर्यं यदेवंविदोपि तव बुद्धिर्नश्वरविषये प्रवर्त्तत इत्याशंक्य बुद्धिमेव लक्षीकृत्याह। हे धिषणे बुद्धे मिथ्याभोगे विनाशिविषयेऽपि यदि तव रुचिः स्पृहा तत्र न किमप्याश्चर्यं स्वभावसुलभत्वात्। यत् कृष्णे क्षणमपि त्वं प्रीतिं कुरुषे इह तु तत् भविकं मंगलं अतर्क्यं तर्कागोचरं मन्ये। अत्यंतालभ्यलाभत्वात्। अत एषा प्रवृत्तिराश्चर्य्या नतु सेति तात्पर्य्यम्। यथा पयसः प्रयत्नैरुच्चैर्गमनमेवाश्चर्य्यं न नीचैरिति। जात्यंतरं। भ्रमरविलसिता छंदः। नपुंसकं क्वापि। भो गो नौ गो भ्रमरविलसितेति सूत्रं। भगणेन गुरुणा नगणाभ्यां गुरुणा च सिद्ध्यति। 97।

अर्थ—नश्वर विषयों में रुचि लेने वाली बुद्धि को लक्ष्य करके कहते हैं—हे मेरी मति! सांसारिक मिथ्या भोगों में जो स्वभाव-सुलभ तेरी प्रवृत्ति होती है इसमें कोई आश्चर्य नहीं है। श्रीकृष्ण में जो तेरी क्षण भर भी प्रीति होती है उसी को मैं अलभ्य आश्चर्यमय लाभ मानता हूँ। 97।

मूल—अन्वगुपेत्य प्रियतरतन्व्या स्तम्भितहासं पिदधतमक्षि।
प्रश्नपराल्यै पुलकिततन्वा ख्यातमहं तं विभुमुपसेवे॥ 98॥

ननु तथापि विषयेभ्यः सर्वात्मना बुद्धिर्निरुध्यतामिति चेदलं तत्क्लेशेन स्वाभीष्टमेवानुसरामि ततो यद्भावि तद्भवत्वित्यभिप्रेत्याह। अहं तं विभुं उपसेवे उपाश्रयामि। कीदृशं। प्रियतरतन्व्याः अतिप्रियांगनायाः। अक्षि लोचनं जातावेकवचनं पिदधतं कराभ्यामाच्छादयंतं। किं कृत्वा। अन्वक् पश्चात्। उपेत्य उपागत्य कथं स्तंभितः। वक्त्र एव निरुद्धो हासो यत्र कर्मणि तत्। पुनः कीदृशं। प्रश्नपराल्यै नेत्रपिधायकं जनं वदेति। प्रश्नपराल्यै सख्यै पुलकिततन्वा रोमांचितशरीरेणैव ख्यातं सोऽयमिति कथितं। स्पर्शजरोमांचतया तज्ज्ञानसंभवात्। जात्यंतरं अनुकूला छंदः। स्यादनुकूलाभतनगयुग्मेति सूत्रं। भगणतगणनगणैर्गुरुभ्यां च सिद्ध्यति। 98।

अर्थ—श्यामा प्यारी के नेत्रों को, पीछे से आकर, चुपके से मूंद लेने पर मुख में आई हँसी को रोकते हुए, नन्दनन्दन का नाम (उनके द्वारा) पूछे जाने पर भी, सखियाँ नहीं बतातीं, किन्तु गात्र-स्पर्श से उत्पन्न होने वाला रोमांच ही जिनका नामोल्लेख कर देता है, मैं उन्हीं (लालजी) का आश्रय ग्रहण करता हूँ। 98।

मूल—कुंजरन्ध्रनिहितैकचक्षुषां गाढरागललितक्रमातुरम्।
गौरनीलमहसोर्गतात्मनां योषितां किमु लभेय पद्रजः॥ 99॥

नन्वीदृशलीलाविशिष्टस्य सेवा कथं संपद्येत तदनुरागिपद्रजःपरमादरेणेति-

द्योतयन् । स्वयमपि तथेच्छति । योषितां अर्थात् व्रजांगनानां पद्रजश्चरणरेणुं किमु लभेय किमु प्राप्नुयां । कीदृशीनां । कुंजरंध्रेषु निहितं निवेशितं । एकमेकं चक्षुर्याभिस्तासां । रंध्रद्वारा तथावलोकनस्य संभवात् । कथं गाढरागेण दृढस्नेहेन ललितो मनोरमो यः क्रमः प्रतिक्षणं नवत्वाभासनपरिपाटी तेन आतुरं यथा स्यात्तथा । पुनः कीदृशीनां । गौरं च नीलं च ये महसी राधाकृष्णाख्यतेजसी तयोर्गतः प्रविष्ट आत्मा मनो यासां तासां । जात्यंतरं रथोद्धता छन्दः । रात्परैर्नरलगैरथोद्धतेति सूत्रं । रगणनगणरगणैर्लघुगुरुभ्यां च सिद्ध्यति । 99 ।

अर्थ––नित्य-विहार-निरत, ऐसे युगल की सेवा एकमात्र सखियों के पदाश्रय से ही संभव है, अतएव कहते हैं––दर्शन के चाव से सदैव कुंज-रन्ध्रों में जो अपने नेत्र लगाए रहती हैं, प्रगाढ़ प्रेम के कारण प्रतिक्षण नव-नवायमान रूप-छटा के अवलोकन से तरलित साँवल-गौर कान्ति में अटक रहे हैं प्राण जिनके, ऐसी सखियों की पद-रज मुझे कब प्राप्त होगी । 99 ।

मूल––
राधिकापरिदृढांध्रिसरोजे
यस्य चेतसि भवेदिह भक्तिः ।
किं विधेयमवशिष्टमभीष्टं
या पिपर्ति विनिहंति च बाधाम् ।। 100 ।।

नन्वेतादृशमनोरथस्तु युज्यते । किं तु विहितानुष्ठानेन निर्विघ्नं संपाद्यतामित्यत आह । इह कर्मभूमौ यस्य चेतसि राधिकापरिवृढांध्रिसरोजे श्रीराधानायकपदकमले भक्तिर्भवेत् । कर्त्तव्यता संकल्पिता वर्तेत किं पुनरनुष्ठितेति । तस्य विधेयं कर्तव्यं किमवशिष्टं न किमपीत्यर्थः । कीदृशी भक्तिः । या अभीष्टं अभिवांछितं पिपर्त्ति पूरयति । बाधां विघ्नं च विनिहन्ति विनाशयति । अभीष्टपूरणे विघ्ननिवारणे च नसाधनांतरापेक्षा संभाव्यते । घटादिप्रकाशने तिमिरनाशने च दीपस्येव । अतः प्रवृत्तमात्रया भक्त्यैव मम सर्वं संपत्स्यत इति भावः । जात्यंतरं स्वागता छंदः । स्वागता रनभगैर्गुरुणा चेति सूत्रं । रगणनगणभगणैर्गुरुभ्यां च सिद्ध्यति । 100 ।

अर्थ––राधावल्लभलाल के चरण-कमलों में जिसकी संसार से हटकर भक्ति हो जाती है, उस भाग्यशाली की समस्त वांछाएँ पूर्ण और बाधाएँ निवृत्त हो जाती हैं । तब उसे इस संसार में कुछ भी करणीय नहीं रह जाता । 100 ।

मूल––कृष्णसनाथमुदंतमबाधं पूर्णकृपाकरसाधुसमाजे ।
औदरिकोद्यमवस्तुमधीनां संगमुदस्य शृणोमि जनानाम् ।।101।।

ननु भक्तिप्रवृत्तेरेव किं साधनं सत्संगतिपूर्वकं कथाश्रवणमेवेत्याशयेनाह ।

अहं उदंतं वार्तां शृणोमि। किंविशिष्टं। कृष्णसनाथं। श्रीकृष्णयुक्तं तदीयमित्यर्थः। कुत्र पूर्णकृपाकरसाधुसमाजे परमकारुणिकभक्तमंडले। कथं अबाधं निरंतरं यथा भवति तथा। किं कृत्वा। जनानां संगं उदस्य त्यक्त्वा। कीदृशानां। औदरिकोद्यमवस्तुमतीनां। उदरार्थ एव य उद्यम आरंभस्तत्र वस्तुबुद्धिर्येषां बहिर्दृष्टीनामित्यर्थः। जात्यंतरं दोधकच्छंदः। दोधकमिच्छति भत्रितयाद्गौ इति सूत्रम्। भगणत्रयेण गुरुभ्यां च सिद्ध्यति। 101।

अर्थ—भक्ति उत्पन्न होने के साधन बतलाते हैं— परमार्थ-रहित होकर केवल उदर-पालन के निमित्त जो लोग उद्यम करते हैं, ऐसे व्यक्तियों का संग त्यागकर मैं तो परम कृपालु रसिक सन्तों का संग करता रहता हूँ और पवित्र श्रीकृष्ण-चरित्र सदैव उनके द्वारा श्रवण करता रहता हूँ। 101।

मूल—वृन्दावन-कुंज-कुटीरगतो राधाभुजमूलभुजो मधुरः।
कोणेन तदीयमुखं रसयन्नक्ष्णः स हरिर्हृदि मे वसतु॥ 102॥

सन्मुखनिःसृतकथाश्रवणेन श्रीकृष्णो हृदि विशतीति द्योतयन्नाह। स हरिर्मे हृदि मनसि वसतु। कीदृशः। वृन्दावनस्य कुंजकुटीरें लतागृहं यगतः प्राप्तः। पुनः कीदृशः। राधाया भुजस्य बाहोर्मूले अंसे भुजो यस्य सः। पुनः कीदृशः। मधुरः। बाह्याभ्यंतरस्निग्धः। किं कुर्वन्। तदीयमुखं तस्या श्रीराधाया मुखं अक्ष्णो नयनस्य कोणेन प्रांतेन अपांगेनेति यावत् रसयन् आस्वादयन् सस्नेहं पश्यन्नित्यर्थः। जात्यंतरं मोटनकं छंदः। स्यान्मोटनकं तजजाश्च लगाविति सूत्रं। तगणेन जगणद्वितयेन लघुगुरुभ्यां च सिद्ध्यति। 102।

अर्थ—वृन्दावन की कुंज-कुटीर में विराजमान, राधारानी के कंधे पर हस्त-कमल रखे हुए, प्रिया-मुख-चंद्र को नेत्र-कोर से सस्नेह निहारते हुए, मधुराति-मधुर नन्दनन्दन मेरे हृदय में निवास करें। 102।

मूल—विश्वपापतूलराशिपावको भक्तहृद्यतापनाशचन्द्रिका।
कामपूर्ति-कल्पवृक्षविभ्रमा यस्य कीर्तिरस्तु मे
हरिः प्रियः॥ 103॥

ननु हृदि वसनेन किमभिलष्यते तत्प्रीतिरेव सर्वानर्थनिवृत्तिसकलार्थलाभयोस्तत्रैवांतर्भूतत्वादित्याशयेनाह। स हरिर्मे प्रियोऽस्तु। स कः यस्य कीर्तिः कीर्तनं विश्वपापतूलराशिपावकः। विश्वेषां आचांडालात्सर्वेषां यानि पापानि विश्वान्येव वा पापानि तान्येव तूलराशिः। निरस्थिकार्पासीवृंदं तत्र पावको वह्निरिव। यथा

वह्नेस्तूलज्वालने नात्यल्पत्वबहुत्वापेक्षा न च प्रयासस्तथैवात्र । पुनः कीदृशी । यस्य कीर्तिर्भक्तहृद्यतापनाशचन्द्रिका । भक्तानां हृदि ये तापास्तेषां नाशाय चन्द्रिका ज्योत्स्नेव यथा चन्द्रिकायाः तापनाशने नाधिकारिनियमस्तथात्रापि । पुनः कीदृशी। कामपूर्तिकल्पवृक्षविभ्रमा। कामानां पूर्त्तिः पूरणं तस्मिन् कल्पवृक्षस्येव विभ्रमो विलासो यस्याः सा । यथा कल्पतरोरुपाश्रितपात्रेषु पात्रमपात्रं कामेषु देयोऽदेयो वेति न विचारस्तथात्रापि कीर्तेः क्वचित्पावकस्य साम्यं क्वचिच्चन्द्रिकायाः क्वचित्कल्पतरोरिति विरोधे न चित्रत्वमुक्तं। जात्यंतरं श्येनी छंदः। श्येन्युदीरिता रजौ रलौ गुरुरिति सूत्रं। रगणजगणरगणैर्लघुगुरुभ्यां च सिद्ध्यति। 103।

अर्थ—रुई को अग्नि जिस प्रकार आसानी से जला डालती है, उसी प्रकार जिनका कीर्तन सम्पूर्ण विश्व के पाप-समूह को भस्म कर देता है, भक्तों के आंतरिक ताप को नष्ट करने के लिए जिनका कीर्त्तन शीतल चाँदनी के समान है और जिनका सुयशगान कल्पवृक्ष के सदृश अनायास ही समस्त कामनाओं की पूर्ति करने वाला है, ऐसे हरि मेरे प्रिय हों। 103 ।

मूल— वर्हचन्द्रचयचुम्बितचिकुरा
तार-हारवलितोरसि मधुरा।
राधिकांसनिहितैकभुजलता,
कृष्ण-मूर्तिरुदियान्मम हृदि किम् ॥ 104॥

सामान्यत उक्त्वेदानीं प्रीतिविषये वैलक्षण्यमाह । कृष्णमूर्तिः श्रीकृष्णविग्रहः मम हृदि किं उदियात् । आविर्भवेत्। कीदृशी । वर्हस्य मयूरपिच्छस्य ये चंद्राः चंद्रिकास्तेषां च य आपीडाकारतया रचितः पुनस्तेन चुंबिताः स्पृष्टाश्चिकुरा यस्याः सा । पुनः कीदृशी। उरसि वक्षःस्थले तारहारवलिता तारो निर्मलः हारो मुक्तावली तेन संवलिता संयुक्ता। पुनः कीदृशी । मधुरा स्निग्धा । पुनः कीदृशी । राधिकांसनिहितैकभुजलता। राधिकाया अंसे स्कंधे निहिता अर्पिता एका भुजलता यया सा। द्वादशाक्षरं वृत्तम् । चंद्रवर्त्मछंदः । चंद्रवर्त्म गदितं तु रनभसैरिति सूत्रं । रगणनगणभगणसगणैः सिद्ध्यति । 104।

अर्थ—मयूर-पिच्छों की चन्द्रिका जिनके केशों को चूम रही है, स्वच्छ मोतियों की माला धारण करने वाले, श्रीकिशोरीजी की गल-बहियाँ दिये हुए, सनेही श्यामसुन्दर का श्रीविग्रह क्या मेरे हृदय में उदित होगा। 104।

मूल— अपांगभङ्गीभिरनङ्गमुच्छ्रयन्
व्रजांगनानां हृदये मुहुर्मुहुः।

किशोरमूर्तिः करिशावविभ्रमः
स मेपि चेतस्युदियात्कदा नु ।। 105 ।।

किं च । स श्रीकृष्णः मे ममापि चेतसि कदा नु उदियात् । प्रकाशेत । किं कुर्वन् । व्रजांगनानां हृदये अपांगभंगीभिः । कटाक्षतरंगैर्मुहुर्मुहुर्वारंवारं अनंगं कामं उच्छ्रयन् । बर्द्धयन् । यथा तासां हृदये तथा ममापीत्यपि शब्दार्थः । कीदृशः । किशोरः पंचदशवर्षप्रमाणवयोऽवच्छिन्ना मूर्तिर्यस्य सः । उक्तं च । कौमारं पंचमाब्दांतं पौगंडं दशमावधि । कैशोरमापंचदशाद्यौवनं तु ततः परमिति । पुनः कीदृशः । करिशावविभ्रमः । करिशावो बालगजस्तस्येव विभ्रमो विलासो यस्य सः । जात्यंतरं वंशस्थविलछंदः । वदन्ति वंशस्थविलं जतौ जराविति सूत्रं । जगणतगणजगण-रगणैः सिद्ध्यति । वंशस्तनितिरिति क्वापि । 105 ।

अर्थ––ब्रजसुन्दरियों के मन में अपनी कटाक्ष-तरंगों से जिस प्रकार काम को बढ़ाते रहते हैं, गज-बालक की भांति विलासी, किशोरशरीर श्रीकृष्ण मेरे भी मन में कभी उसी प्रकार बार-बार प्रकाशित हों । 105 ।

मूल–– श्रीराधिकाकृष्णपदाब्जतृष्णया
वृश्च्येत चेदन्यरुचिः समन्ततः ।
सप्रत्ययं वाचि तदामहीयसां
तृणैकतुल्याऽगुणतेति भाव्यते ।। 106 ।।

ननु चेदयमेव पुरुषार्थः कथमन्ये नैर्गुण्याय यतंते । अनास्वादितभक्तिरसत्वा-देवेत्याशयेनाह । चेत् यदि श्रीराधिकाकृष्णपदाब्जतृष्णया श्रीराधाकृष्णचरण-कमलातिस्पृहयाऽन्यरुचिः । अन्येषु साधनसाध्येषु या रुचिरभिलाषः । सा समन्ततः सर्वतो वृश्च्येत च्छिद्येत तदा इति भाव्यते । ज्ञायते । इतीति किं । अगुणता नैर्गुण्यं तृणैकतुल्या । तृणेन एका केवला या तुला तत्र योग्या अतितुच्छेत्यर्थः । कथं महीयसां भक्तिरसिकानां वाचि भक्तेरपेक्षयाऽतितुच्छं नैर्गुण्यमिति श्रुतायां वाण्यां सप्रत्ययं सप्रीति यथा स्यात्तथा तेषामपि वाक्ये तदा प्रतीतिर्भवेदिति भावः । इन्द्रवंशा छंदः । तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ इति सूत्रं । तदेव वंशस्थविलं प्रथमाक्षरे गुरौ सति इंद्रवंशा कथ्यते । 106 ।

अर्थ––यदि श्रीश्यामाश्याम के चरण-कमलों में प्रीति हो जाती है, तो अन्य साधन-साध्यों से मन हट जाता है, भक्ति रस के आचार्यों की वाणी में विश्वास उत्पन्न होता है और निर्गुण-पथ तुच्छ प्रतीत होने लगता है । 106 ।

मूल-- विधोः करभरैः सुमृष्टविपिने,
कलिन्दतनयातटेऽद्‌भुतगतिः ।
सुरासवलये ननर्त युवति-
जनैर्मनसि मे स नृत्यतु हरिः ।। 107 ।।

प्रस्तुतमनुसरति । स हरिर्मे मनसि नृत्यतु सविलासं चमत्करोतु । नन्वतिचपले मनसि कथं नर्त्तनमित्यत आह । युवतिजनैः सह सुरासवलये शोभनो यो रासश्चंचल-चक्रोपरि नृत्यं तदर्थरचिते वलये मंडले यो ननर्त्त नर्त्तितवान् पूर्वाभ्यासकौशलद्योतनाय लिटि प्रयोगः । ननु लिटचनुपयोगात् । क्व ननर्त्त । कलिंदतनया तटे यमुनातीरे । कीदृशे । विधोः करभरैः चंद्रमसः किरणाधिक्यैः सुमृष्टं सम्यगुज्जवलितं विपिनं वनं यस्मिंस्तत्र। कीदृशः। अद्‌भुतगतिः अद्‌भुता आश्चर्या पादयोरुत्क्षेपणादिरूपा गतिर्यस्य सः । अतो न तस्यातिचपलमपि मन आक्रमितुमशक्यमिति भावः । जात्यंतरं जलोद्धतगतिः छन्दः । जसौ जसयुतौ जलोद्धतगतिरिति सूत्रं । जगणसगणजगण-सगणैः सिद्ध्यति । 107 ।

अर्थ--चन्द्रमा की चाँदनी से जगमगाते हुए श्रीवृन्दावन में यमुना-तीर पर रचित चक्रवत् घूमते हुए रास-मंडल पर, युवति-जनों के सहित अद्भुत गति से नाचते हुए श्याम-सुन्दर मेरे चंचल मन में (भी) नृत्य करें । 107 ।

मूल-- न भौमे न दिव्ये न मोक्षेऽपि चेतः
पदे कामितामेति यत्नैरवाप्ये ।
महादुर्लभं राधिकाकृष्णनाम-
स्फुरद्रोमचक्रांध्रिरेणौ सकामम् ।। 108 ।।

नन्वलमतिदुर्लभमनोरथेन सुशक्ये प्रवर्त्यतामित्यत आह । भौमे भूमिसंबंधि-नि पदे भोगस्थाने चेतः कामितामर्थित्वं न एति न गच्छति । न च दिव्ये द्योसंबंधिनि न च मोक्षे मोक्षरूपेपि । कीदृशे । सर्वत्र यत्नैस्तपोयज्ञदानादिभिः अवाप्ये प्राप्ये । किंतु । राधाकृष्णनाम्ना उच्चरितमात्रेण । स्फुरंति रोमचक्राणि रोममंडलानि येषां तेषामंध्रिरेणौ चरणधूलौ सकामं साभिलाषं । कीदृशे । महादुर्लभे अतकर्य-भगवदनुकंपेतरपुण्यपुंजैरप्यलभ्ये अतोऽन्यत्र मन एव न प्रवर्त्तत इत्यर्थः । जात्यंतरं भुजंगप्रयातं छन्दः । भुजंगप्रयातं चतुर्भिर्यकारैरिति सूत्रं । यगणचतुष्टयेन सिद्ध्यति । 108 ।

अर्थ--पृथ्वी के भोगादिकों में मेरा मन नहीं लगता, प्रयत्न-साध्य यज्ञ-दानादि

से प्राप्त होने वाले स्वर्ग-मोक्षादिकों में भी मेरी रुचि नहीं रह गई है, भगवत्कृपा के बिना अन्यान्य उपायों से जो अप्राप्य है, अत्यन्त दुर्लभ श्यामा-श्याम के नामोच्चारण मात्र से जिनको रोमांच होता रहता है, ऐसे रसिक भक्तों के चरण-कमलों की रज ही मेरी गति है। मैं केवल उसी को चाहता हूँ । अन्यत्र कहीं मेरा मन ही नहीं जाता। 108 ।

मूल—— अशुभं च शुभं किमु लोकमते
कलयेदिदमर्तिरहो शिरसः।
यमुनातटकेलिकलाकुतुकी
हृदये वसतादयमेव विभुः॥ 109॥

ननु किमिति स्वातंत्र्येणाग्रहः क्रियतेऽन्यमतविचारेणापि श्रेयो निर्धार्यतामित्यत आह। लोकानां मते किं वा शुभं किम् श्रेयः किं चाशुभं अश्रेय इदं मे शिरसः अर्त्तिः पीडा कलयेत्। विचारयेत्। नानात्वेन क्लेशावहत्वात्। लोकोक्त्यनुकरणमेतत्। तर्हि कस्त्वद्विचारस्तत्राह। अयमेव विभुर्हृदये वसतात् वसतु। कीदृशः। यमुना-तटकेलिकलाकुतुकी। यमुनातटे याः केलयः क्रीडास्तासां कला अवांतरभागास्तासु कुतुकी कौतूहलवान्। अभिनिविष्ट इत्यर्थः। जात्यंतरं तोटक छन्दः। वद-तोटकमब्धि-सकारयुतमिति सूत्रं। चतुर्भिः सगणैः सिद्ध्यति। 109।

अर्थ——लोगों के मत में कौन सी बात शुभ है और कौन सी अशुभ, इसका विमर्श करना मेरे लिए सिरदर्द है। यमुना-तट पर नाना प्रकार की केलि-कलाओं के कौतुकी नन्द-नन्दन मेरे मन में बस जायं, बस, मैं तो यही चाहता हूँ। 109।

मूल—— अङ्गभेदैः पृथङ् मोदमातन्वती
स्नेहपूरांकिता कृष्णपादश्रिया।
श्रीगुरुप्रीतिसंचारिका धर्षिता
भक्तिरालिंगतु प्रेयसी मामलम्॥ 110॥

ननु हृदये केन प्रकारेण वसेत् किं वा वसतेर्लक्षणमित्यत्र स्नेहभक्तिरेवेत्याश-येनाह। भक्तिर्मां अलं गाढं आलिंगतु मयि प्रादुर्भूयादित्यर्थः। कीदृशी। प्रेयसी अति प्रिया। पुनः कीदृशी। स्नेहपूरांकिता स्नेहलक्षणेत्यर्थः। पुनः कीदृशी। अंगभेदैः। श्रवणा-दिभिः पृथक् भिन्नं मोदं हर्षं आतन्वती कुर्वाणा। श्रवणादीनां स्वातंत्र्येण सुखा-वहत्वात्। पुनः कीदृशी। कृष्णपादाश्रया। कृष्णपादावेवाश्रयो भजनीयत्वेन यस्यां सा। ननु कथमेतादृशभक्तेराविर्भावस्तत्राह। श्रीगुर्वति श्रीगुरौ या प्रीतिः सैव संचारिका प्रेरिका तथा धर्षिता उत्पादिता। अन्यापि प्रेयसी अंगभेदैः सुंदरावयवैः।

पृथङ मोदं कुर्वाणा दृढाश्रयापि दूत्याकृष्टा स्नेहेनालिंगतीति छायार्थः। स्त्रग्विणी छंदः। कीर्त्तितैषा चतूरेफिका स्त्रग्विणीति सूत्रं। चतुर्भो रगणैः सिद्धयति। 110।

अर्थ——स्नेहशीला, अत्यन्त प्रेम प्रदान करने वाली, अंग-प्रत्यंगों को श्रवण-कथनादि रूप से सुख पहुँचाने वाली, श्यामसुन्दर की चरणाश्रिता और श्रीगुरुचरणों में प्रीति करने से जिसकी उत्पत्ति होती है, ऐसी प्रेमलक्षणा भक्ति मेरे चित्त को आवृत कर ले। 110।

मूल——

उक्तं निःशंकं व्यंजिताकूतरम्यं,
श्रोतुं राधायाः सम्मुखीना वयस्याः।
भंग्याक्ष्णोर्जोषं वारयन्तं हसन्तीः
श्रीकृष्णं लीनं राधयामो लतौघे॥ 111॥

ननु किं विशिष्टस्य श्रीकृष्णस्य भक्तिरभिलष्यते। तत्राह। वयं श्रीकृष्णं राधयामः सेवामहे। कीदृशं। लतौघे लतापुंजे लीनं प्रच्छन्नं। किं कर्त्तुं श्रीराधाया उक्तं वचनं श्रोतुं। कीदृशं उक्तं निःशंकं निर्गता शंका यस्मात्। क्रियापदं वा। आप्तसखीषु संकोचाभावात्। अतएव व्यंजिताकूतरम्यं। व्यंजितः प्रकाशितो य आकूतोऽभिप्रायः रहस्यवार्त्ता तेन रम्यं रमणीयं। पुनः कीदृशं। जोषं मौनं यथा स्यात्तथा। अक्ष्णोर्भंग्या नेत्रचालनेन वयस्याः सखीर्वारयंतं। कीदृशीः संमुखीनाः संमुखे स्थिताः राधायाः पृष्ठतः स्थितस्य श्रीकृष्णस्यापि तासां सांमुख्यात्। पुनः कीदृशीर्हसंती-र्लतांतरेषु तस्य मुखचालनं वीक्ष्य हास्यं कुर्वाणास्तासां हास्येन स्वज्ञानाद्रसभंग-भयाद्वारयंतमित्यर्थः। जात्यंतरं वैश्वदेवी छन्दः। वाणाश्वैश्छिन्ना वैश्वदेवी ममौ याविति सूत्रं। मगणद्वयेन यगणद्वयेन च सिद्धयति। पंचभिः सप्तभिरक्षरैर्जिह्वा-विश्रामः। 111।

अर्थ——श्रीलाडलीजी अपनी मनमिली सखियों में बैठकर निःसंकोच रूप से रहस्य की बातें कर रही हैं। श्रीलालजी लताओं के झुरमुट में छुपकर प्रियाजी के पीछे और सखियों के ठीक सामने विराज रहे हैं। वचन-माधुरी को सुनकर जब ग्रीवा डुलाने लगते हैं तो सखियाँ हँस पड़ती हैं, रस-भंग न हो इस भय से उनको आँखों के संकेत द्वारा निषेध करते हुए नन्दनन्दन का मैं सेवन करता हूँ। 111।

मूल——

रुचिरस्मितार्द्रमुखमण्डलक-
श्चलखंजरीटनयनो मधुरः।
नवनीलपद्मदलदेहरुचिः
स युवा जहार हृदयं हठतः॥ 112॥

नन्वन्योऽपि भजनीयः सेव्यतां कथमत्रैवाग्रहस्तत्राह । स युवा तरुणो मे हृदयं हठतः हठेन जहार हृतवान् । निजयैवोत्कृष्टरसाकर्षणशक्त्या स्वप्रवणं कृतवानित्यर्थः । कीदृशः । रुचिरेण स्मितेनार्द्रं स्निग्धं मुखमण्डलं यस्य सः । पुनः कीदृशः । चलौ चंचलौ यौ खंजरीटौ खंजनौ तद्वन्नयने यस्य सः । पुनः कीदृशः । मधुरः कोमलः । पुनः कीदृशः । नवं नूतनं सद्यः स्फुटितं यन्नीलपद्मं नीलकमलं तस्य दलं पत्रं तद्वद्देहरुचिर्यस्य सः । अतस्तद्रसाविष्टं मनो नान्यत्र गच्छतीत्यर्थः । जात्यंतरं प्रमिताक्षरा छन्दः । प्रमिताक्षरा सजससैः कथितेति सूत्रं । सगणजगणसगणद्वयैः सिद्ध्यति । 112 ।

मूल— त्वमखिलश्रुतिगुप्तरसः कुतो
मलिनकर्मकरोऽहमहो कुतः ।
इति विचारमपोह्य हृदीश्वरे
त्वयि हरे तरलस्तु मनोरथः ॥ 113 ॥

अतिदुर्घटितेऽपि प्रवृत्त्या मनोहरणमेव द्योतयंस्तमेव प्रत्याह । हे हरे त्वं कुतः क्व अहं कुतः अहो आश्चर्य्यं महावैषम्यात् । तदेवाह । कीदृशस्त्वं । अखिलश्रुतिगुप्तरसः सर्ववेदेष्वपि निगूढरसः । कीदृशोऽहं । मलिनकर्मकरः । निषिद्धकर्मकर्त्तेति विचारमपोह्य दूरीकृत्य । मनोरथस्तु त्वयि तरलश्चपलः । मनोवृत्तिस्त्वयि निरंतरं प्रविशतीत्यर्थः । ननु मनोवृत्तिं को जानाति त्वमेवेत्याशयेन विशिनष्टि । कीदृशे । त्वयि हृदीश्वरे मनोनियंतरि । अतस्तव सर्वमेवावगतमित्यर्थः । जात्यंतरं द्रुतविलम्बितं छन्दः । द्रुतविलम्बितमाह नभौ भराविति सूत्रं । नगर्णभगणद्वर्योरगणैः सिद्ध्यति । 113 ।

अर्थ—हे प्रभो! समस्त वेदों ने जिस रस को अपने में छिपा कर रखा हुआ है, ऐसे रसस्वरूप कहाँ आप और निषिद्ध कर्म करने वाला कहाँ यह (मैं) ! इस विचार को मन में स्थान न दें, क्योंकि हृदयेश्वर होकर यह तो आप जानते ही हैं कि मेरे चित्त की वृत्ति सदैव आप ही में लगी रहती है । 113 ।

मूल— मनसिजरसमन्थरालोकितै-
र्व्रजहरिणदृशां समूहैर्मुदा ।
स्फुटप्रणयरसभरैः समालोकितः
स्फुरतु हृदि सदा स राधापतिः ॥ 114 ॥

तदेव दर्शयन्मनोरथं कुरुते । स राधापतिर्हृदि मनसि सदा निरन्तरं स्फुरतु । कीदृशः । व्रजहरिणदृशां व्रजस्य मृगलोचनानां समूहैर्मुदा हर्षेण सम्यगालोकितः दृष्टः । कीदृशैः । मनसिजरसमंथरालोकितैः । मनसिजरसेन कामरसेन मंथराणि शिथिलानि आलोकितानि येषां तैः। पुनः कीदृशैः । स्फुटप्रणयभरैः स्फुटो व्यक्तः प्रणयभरः स्नेहाधिक्यं येषां तैः । स्फुटप्रणयेत्यत्र प्रपरतो लघुत्वं पूर्ववत् । जात्यन्तरं मंदाकिनी छन्दः । ननररघटिता तु मन्दाकिनीति सूत्रं । नगणद्वयेन रगणद्वयेन च सिद्ध्यति । 114 ।

अर्थ—कामरस से शिथिलगति बनी हुई दृष्टि से, ब्रज की मृगनयनियों के समूह द्वारा प्रकट प्रेमभर से, उल्लासपूर्वक अवलोकित, वह राधावर, हृदय में स्फुरित हों । 114 ।

मूल— विपिनविनोदी विशसितविघ्नः
सुललितराधादृढरतिनिघ्नः ।
मयि सविदग्धैरपचितपादः
कृपयतु कृष्णोऽपहृतविषादः ॥ 115 ॥

ननु हृदि स्फुरणाय किं साधनं तत्कृपैवेत्याशयेनाह । स श्रीकृष्णो मयि कृपयतु कृपां करोतु । कीदृशः । विपिनविनोदी श्रीवृन्दावनविलासी । पुनः कीदृशः । विशसितविघ्नः । विशसितानि विनाशितानि विघ्नानि विलासांतरायहेतवो येन सः । यद्वा विपिनविनोदेनैव निवारितलोकविघ्नस्तत्स्मरणकीर्त्तनादिना सकलानर्थनिवृत्तेः । पुनः कीदृशः । सुललितराधादृढरतिनिघ्नः शोभनं ललितं विलासो यस्याः सा चासौ राधा तस्यां दृढा गाढा या रतिः प्रीतिस्तस्यां निघ्नः अधीन-स्तद्वश इत्यर्थः । पुनः कीदृशः । विदग्धैरतिनिपुणैरपचितौ पूजितौ पादौ यस्य सः । पुनः कीदृशः । अपहृतविषादः । पादसेवकानामेवापहृतो दूरीकृतो विषादो जिज्ञासा-क्लेशो येन सः । तत्रैव परमनिर्णयात् । जात्यंतरं कुसुमविचित्रा छंदः । नयसहितौ न्यौ कुसुमविचित्रेति सूत्रं । नगण यगणनगणयगणैः सिद्ध्यति । 115 ।

अर्थ—श्रीवृन्दावन-विलासी, विनष्ट कर दिये हैं विलासरस के उपासकों के समस्त-विघ्न जिन्होंने, विलासपरावधि श्रीराधारानी में रहने वाली प्रीति के परवश अति निपुण जनों के द्वारा पूजे जाते हैं चरण जिनके, एवं ऐसे पाद-पूजन करने वालों के क्लेशों को दूर करने वाले वह नन्दनन्दन मुझ पर कृपा करें । 115 ।

मूल— व्रजयुवतीजनलोचनपेयं
कथमपि नो मुनिमिर्हृदि नेयम् ।

मम खलु निश्चलिता धिषणेयं
यदसितगौरमहो ननु गेयम् ॥ 116॥

ननु कुतः श्रीकृष्णकृपा भवति किं वा तल्लक्षणमत आह। ननु अहो मम धिषणा बुद्धिः एवं खलु निश्चला स्थिरा कथं यतः। असितगौरमहः। असितं श्यामं च गौरं च यन्महस्तेजः श्रीकृष्णराधारूपं तद्गेयं कीर्त्तनीयं। उपलक्षणमेतत्। स्नेहैकलभ्यतां दर्शयितुं विशिनष्टि व्रजेति। व्रजयुवतीजनानां लोचनपेयं नेत्रगोचरं। ननु किमाश्चर्यं तत्राह। मुनिभिर्योगिभिः कथमपि केनापि प्रकारेण हृदि हृदये नो नेयं न प्राप्यं। आनेतुमशक्यमित्यर्थः अतः श्रवणकीर्त्तनादेरेव तत् कृपा तस्या अपि तदेव लक्षणमितिभावः। जात्यंतरं तामरसछन्दः। संयुति तामरतं स्याद्। न जजाय इति सूत्रं। नगणजगणद्वययगणैः सिद्ध्यति। 116।

अर्थ—श्रीराधा-श्यामसुन्दर जो अनेक यत्न करने पर भी योगियों के ध्यानगम्य नहीं होते, किन्तु ब्रज की युवतीजन जिनके रूप-रस को अपने नेत्रों से पान करती रहती हैं, अर्थात् ध्यान में नहीं, अपितु प्रत्यक्ष रूप से जो सदैव उनके नेत्रगोचर रहते हैं, यह देखकर मेरी बुद्धि तो इसी निष्कर्ष पर पहुँची है कि यह युगल तो प्रेम के द्वारा ही प्राप्त होते हैं। अतः इस गौर-श्याम तेज का प्रीतिपूर्वक गान-कीर्तन करते रहना चाहिये। 116।

मूल— नरजनुरेत्य सुपर्वंवाञ्छितं
हरिपदमाद्रियते न मूढधीः।
पशुसुलभं विषयं श्रयेत यः
स पशुगणादपि शोच्यते बुधैः॥ 117॥

व्यतिरेके निन्दामाह। यो मूढधीः शठमतिर्नरजनुर्नरजन्म एत्य प्राप्य हरिपदं नाद्रियते न सत्करोति न भजतीत्यर्थः। किन्तु विषयं श्रयते सेवते। स बुधैस्तत्त्वज्ञैः। पशुगणादपि शोच्यते चिन्त्यते। उपयोगिदेहवैयर्थ्यात्। कीदृशं नरजनुः सुपर्वभिः वांछितं सुपर्वभिर्देवैरपि वांछितं। सर्वपुरुषार्थसाधनौपयिकत्वात्। उक्तं च श्रीभागवते। ब्राह्मणा येभ्यर्थितामपि च नो नृगतिं प्रपन्ना इति। विषयं कीदृशं। पशुसुलभं। पशुभिः शूकरादिभिरपि सुखेन लभ्यत इति तं। तेष्वपि सर्वेन्द्रियभोगस्य संस्कारसुलभत्वात् जनुर्जननजन्मानीत्यमरः। सुपर्वाणः सुमनस इति च। जात्यंतरं मालती छन्दः भवति। न जावथ मालती जराविति सूत्रं। नगणजगणद्वयरगणैः सिद्ध्यति। 117।

अर्थ—जो मन्दबुद्धि देवदुर्लभ मानव-देह को प्राप्त करके भी हरिचरणारविन्द का भजन नहीं करते वरंच इतर योनियों में भी सुलभ, विषयों के सेवन में प्रवृत्त रहते हैं उन्हें तत्त्वज्ञ पशु से भी अधिक शोचनीय मानते हैं। 117।

मूल— कृष्णामलभक्तिः स्वल्पापि
पुनाति सांगोऽपि न योगादिरशेषम्।
इत्येव विवेको वेदादिनिरूढो
भ्रान्त्या कुमनीषैर्ज्ञातं न तु तत्त्वम्॥ 118॥

ननु वेदबोधितवाक्यैः प्रवृत्तिपरत्वम् न स्वतस्तस्य को दोष इति चेदत आह। कृष्णस्य अमला स्वतः शुद्धा या भक्तिः सा स्वल्पापि प्रारब्धमात्रापि अशेषं निःशेषं यथा स्यात्तथा पुनाति पवित्रयति। अन्यो योगादिः स सांगोऽपि सम्यगनुष्ठितोऽपि तथा न पुनाति। उक्तं च। विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः। नात्यंत-शुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनंते इति। इत्येव विवेको विचारो वेदादिषु शास्त्रेषु निगूढः प्रसिद्धः। नान्यथा। कुमनीषैः कुबुद्धिभिस्तु भ्रान्त्या भ्रमेण तत्त्वं न ज्ञातं कर्मनिष्ठा एव ते बभूवुरित्यर्थः। श्रुतिश्च न तं विदाथ य इमा जनानान्यद्युष्माकमंतरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरंतीत्यादि:। अतः संस्कार-सुलभभ्रमेणैव प्रवृत्तिनिष्ठत्वं न तु वेदविचारेणेत्यर्थः। जात्यंतरं मणिमाला छन्दः। त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैरिति सूत्रं। तगणयगणतगणयगणैः सिद्ध्यति। षड्भिरक्षरैर्जिह्वाविश्रामः। 118।

अर्थ—श्रीकृष्ण की स्वतःसिद्ध अमल-भक्ति थोड़ी-सी भी जिस प्रकार मनुष्यों को सम्पूर्ण रूप से पवित्र बना देती है, उस प्रकार से अन्य जो योगादि उपाय हैं, उनके समस्त अंगों का साधन करने पर भी वैसी पवित्रता नहीं आ पाती। उक्त विवेक वेद-उपनिषदादि में किया हुआ है। अपने को (व्यर्थ में) पंडित मानने वाले इस बात को भ्रांतिपूर्वक जानते हैं, तत्त्वतः नहीं। अर्थात् जानकर भी मानते नहीं। 118।

मूल— भ्रामंभ्रामं रविदुहितुस्तीरेषु
स्मारंस्मारं घनतडिदाभं तेजः।
गायंगायं तदतुलगाथा रम्या
प्रायंप्रायं बत! विनयाम्यायुः किम्॥ 119॥

प्रस्तुतमनुसरति। अहं आयुः कालं स्वतो गच्छदेव अनेन प्रकारेण किं विनयामि

समापयामि । बतेति हर्षे । केन प्रकारेण रविदुहितुर्यमुनायास्तीरेषु । श्रीवृन्दावन-प्रदेशेषु भ्रामं-भ्रामं भ्रांत्वा भ्रांत्वा । किं कृत्वा । घनतडिदाभं यत्तेजः श्रीकृष्ण-राधाख्यं स्मारं-स्मारं स्मृत्वा स्मृत्वा । पुनः किं कृत्वा । तदतुलगाथास्तयोरेवानुपम-वार्त्ताः रम्या रमणीयाः । गायं-गायं गीत्वा गीत्वा । पुनः किं कृत्वा । प्रायं-प्रायं प्रीत्वा प्रीत्वा । जात्यंतरं जलधरमालाछन्दः । मोभः स्मौचेज्जलधरमालाब्ध्यंगै-रिति सूत्रं । मगण भगणसगणमगणैः सिद्ध्यति । चतुर्भिरष्टाभिरक्षरैर्जिह्वाविश्रामः । । 119 ।

अर्थ—आयु तो व्यतीत हो ही रही है । क्या मैं अपने समय को श्रीवृन्दावन-धाम में यमुनातीर पर विचरण करते हुए मेघ और बिजली की कान्ति के समान तेज वाले युगल सरकार का स्मरण कर-करके, आनन्दमग्न हो-होकर उन्हीं की अनुपम लीला-वार्ताओं को गाते-गाते बिता सकूंगा । 119 ।

मूल—

प्रेमाणं विदधतमुष्णधामपुत्र्या–
स्तीरान्तर्निविडनिकुंजमन्दिरेषु ।
बाभज्ये सकलगुणालयं किशोरं
श्रीराधाधररसमत्तमप्रमत्तः ॥ 120 ॥

ननु तत्कथं संपद्येत तद्भजनादेवेत्याशयेनाह । अहं किशोरं बाभज्ये अतिशयेन भजामि । कीदृशं उष्णधामा सूर्यस्तस्य पुत्र्या यमुनायास्तीरांतर्निविडनिकुंज मन्दिरेषु तटांतर्गतसघनलतागृहेषु प्रेमाणं स्नेहं विदधतं कुर्वंतं । प्रीत्या तत्रैव वसंतमित्यर्थः । पुनः कीदृशं । सकलगुणालयं सर्वगुणाधिष्ठानं । पुनः कीदृशं । श्रीराधाया अधररसेन मत्तं विवशं । कीदृशोऽहं । अप्रमत्तः सावधानः । त्रयोदशाक्षरं प्रहर्षिणी छन्दः । आशाभिर्मनजरगाः प्रहर्षिणीयमिति सूत्रं । मगणनगणजगण-रगणैर्गुरुणा च सिद्ध्यति । 120 ।

अर्थ—मैं सावधान होकर यमुनातटवर्ती सघनलता-मंदिर में सदा प्रीतियुक्त होकर विराजमान, सर्वगुणसम्पन्न और श्रीकिशोरीजी के अधर-मधु से मत्त किशोर का निरन्तर भजन करता हूँ । 120 ।

मूल—

प्रतोलिकामभियमुनं विराजयन्
वनावलेरनुगतबल्लवीगणः ।
श्रमोदकैरुपचितनीलविग्रहो
दृशः पदं भवतु स कोऽपि वल्लवः ॥ 121 ॥

किं च । स कोऽप्यतर्क्यो बल्लवो मे दृशः दृष्टेः पदं स्थानं विषय इति यावद् भवतु । किं कुर्वन् । वनावलेः । श्रीवृन्दावनपंक्तेः अभियमुनं यमुनायाः संमुखं प्रतोलिकां रथ्यां विराजयन् स्वगत्या शोभयन् । कीदृशः । अनुगतः पृष्ठतो गामी बल्लवीगणो यस्य सः । पुनः कीदृशः । श्रमोदकैर्वनविहारश्रमजनितस्वेदजलैरुपचितो व्याप्तो नीलविग्रहः श्यामं शरीरं यस्य सः । जात्यंतरं रुचिरा छन्दः । जभौ सजौ गिति रुचिरा चतुर्भिर्ग्रहैरिति सूत्रं । जगणभगणसगणजगणैर्गुरुणा च सिद्ध्यति । चतुर्भिर्नवभिश्चाक्षरैर्यतिः । 121 ।

अर्थ—श्रीवृन्दावन की वनावलि के मध्य यमुनातीरवर्ती कुंजगली में वनविहार के उपरान्त श्रमजल से व्याप्त है श्याम शरीर जिनका, सखीजनों द्वारा परिवेष्टित कोई अनिर्वचनीय प्रियतम ब्रजवल्लभ मेरे नेत्रगोचर हों । 121 ।

मूल— वातैर्मंदैः कम्पितपत्रावलिदृश्यं
पुष्पालीषु भ्रांतषडंघ्रिध्वनिरम्यम् ।
वृन्दारण्येऽशोकलताभिः परिवीतं
सद्मालोके कृष्णरतीनां क्षणदायि ॥ 122 ॥

किं च अहं वृन्दारण्ये सद्म मंदिरं आलोके पश्यामि । कीदृशं । अशोकलताभिः परिवीतं वेष्टितं । पुनः कीदृशं । मंदैः कोमलैर्वातैर्वायुभिः कंपिताभिः पत्रावलिभिः पत्रपंक्तिभिर्दृश्यं दर्शनीयं । पुनः कीदृशं । पुष्पालिषु कुसुमपंक्तिषु भ्रान्ता इतस्ततश्चलिता एतत्समीचीनमेतद्वेति विभ्रांता षडंघ्रयो भ्रमरास्तेषां ध्वनिना नादेन रम्यं रमणीयं । पुनः कीदृशं । कृष्णरतीनां श्रीकृष्णरतिक्रीडानां क्षणदायि अवसरदायकं । जात्यंतरं मत्तमयूरं छन्दः । वेदै रंध्रै म्तौ यसगा मत्तमयूरमिति सूत्रं । मगणतगणयगणसगणैर्गुरुणा च सिद्ध्यति । चतुर्भिर्नवभिश्चाक्षरैर्जिह्वाविश्रामः । 122 ।

अर्थ—अशोक की लताओं से लिपटे हुए, मन्द-मन्द चलने वाली वायु से कम्पित अतएव दर्शनीय, फूलों के ऊपर मंडराते हुए भँवरों की गुंजार से रमणीय एवं श्यामसुन्दर को रतिक्रीडा का अवसर देने वाले श्रीवृन्दावन के निभृत-निकुंज मन्दिर की ऐसी कृपा हो कि मैं उसे देख पाऊँ । 122 ।

मूल— जगति विततसुखदायकलीलः
स्वभजननिखिलदसुन्दरशीलः ।
नवघनरुचिहरमेचकवेषः
स तु मयि भवतु कृताभिनिवेशः ॥ 123 ॥

**श्रीकृष्णे तु बहुधांतःकरणवृत्तीनां प्रवृत्तिस्तस्य तु ममत्वं कस्मिंश्चित्सुभगे भवतीति तदेवाशास्ते। स तु श्रीकृष्णः मयि कृताभिनिवेशः कृतममत्वाग्रहो भवतु। कीदृशः जगति विश्वे विततः प्रसृताः सुगीता इत्यर्थः। सुखदायिका लीला यस्य सः। पुनः कीदृशः। स्वभजनेन स्वभक्त्या निखिलदं सर्वप्रदं सुंदरं अनुपमं कारूण्यादि-गुणैः कमनीयं शीलं यस्य सः। पुनः कीदृशः। नवो नूतनः अत्यक्तपया यो घनो मेघस्तस्य रुचिं दीप्तिं हरतीति। तादृशो मेचकः श्यामलो वेषो यस्य सः। जात्यंतरं चंडी छन्दः। नयुगलसयुगलगैरिह चंडीति सूत्रं। नगणद्वयसगणद्वयाभ्यां गुरुणा च सिद्धयति। 123।**

अर्थ—जगत में व्याप्त है यश जिनका, सुख प्रदान करने वाली है लीला जिनकी, अपने भक्तों के लिए कुछ भी अदेय नहीं है जिनको, अपूर्व करुणा करने का है स्वभाव जिनका, नवीन मेघ की कान्ति को चुराने वाला है श्यामल वेष जिनका, ऐसे नन्दनन्दन के मन में मेरे लिए ममता उत्पन्न हो जाय। 123।

मूल— **अरुणायते निविडपक्ष्मभूषिते**
**प्रियगात्रचिह्नकलनातिरोषिते।**
**अवलोकयामि किमु राधिकाक्षिणी**
**भयमच्युते विदधती कृतागसि ॥ 124 ॥**

**मनोरथांतरं कुरुते। राधिकाक्षिणी श्रीराधिकाविलोचने किमु अवलोकयामि पश्यामि किं। कीदृशे। प्रियस्य श्रीकृष्णस्य गात्रे यानि चिह्नानि नखक्षतादीनि तेषाम् कलनेन दर्शनेन। अतिरोषं प्रापिते। तद्द्योतकविशेषणं। अरुणायते। अरुणे आरक्ते च ते आयते विशाले च। ते पुनः कीदृशे। निविडपक्ष्मभूषिते। सघनावरण-रोमालंकृते। पुनः कीदृशे। अच्युतेऽपि भयं दधती जनयती रोषव्यञ्जनात्। कीदृशे अच्युते। कृतागसि कृतापराधे। जात्यंतरं मञ्जुभाषिणी छन्दः। सजसा जगौ च यदि मञ्जुभाषिणीति सूत्रं। सगणजगणसगणजगणैर्गुरुणा च सिद्धयति सुनंदनी-ति शंभोः। 124।**

अर्थ—श्रीअंग पर निशाकालीन चिह्नों को देखकर सहज रुष्ट अतएव अरुण, और सघन वरौनियों से विभूषित, स्वयं को अपराधी मानते हुए प्रियतम के भी मन में भय उपजाने वाले, श्रीस्वामिनीजी के बड़े नेत्रकमलों को मैं कब देख पाऊँगा। 124।

मूल— **अवनमितशिराः साधुपादांबुजे-**
**ष्वतिदृढपरमानन्दबुद्धिर्गुरौ।**

प्रसरदतिरुचिः कृष्णसंकीर्त्तने
य इह स तु कृती दुर्लभो भूतले ।। 125 ।।

सर्वमेव श्रेयः सदनुकम्पात एव किंतु तादृशसंग एव दुर्लभ इत्याह । य एवंभूतः कृती पुण्यवान् स तु इह भूतले दुर्लभः दुष्प्रापः । कीदृशः । साधुपादाम्बुजेषु भक्तचरण-कमलेषु अवनमितं शिरो येन सः । पुनः कीदृशः । गुरौ श्रीगुरुविषये । अतिदृढा निश्चला परमानंदः परमानन्दरूप इति बुद्धिर्यस्य सः । ईश्वरदृष्टिरित्यर्थः । पुनः कीदृशः । कृष्णसंकीर्त्तने श्रीकृष्णकीर्त्यां प्रसरंती प्रतिक्षणं वर्द्धमाना अतिरुचिः स्पृहा यस्य सः । जात्यंतरं चंद्रिकाछन्दः । उत्पलिनी क्वचिद् । ननततगुरुभिश्चंद्रिकाश्वैश्च षड्भिरिति सूत्रं । नगणद्वयेन तगणद्वयेन गुरुणा च सिद्धयति । सप्तभिः षड्भिश्चा-क्षरैर्यतिः । 125 ।

अर्थ—सम्पूर्ण श्रेय रसिकों की कृपा से ही सम्भव है किन्तु ऐसा संग दुर्लभ है—रसिक भक्तों के चरण-कमलों में सिर को नवाने वाले, अत्यन्त दृढ़तापूर्वक गुरुदेव को परमानन्द स्वरूप ईश्वर समझने वाले, भगवन्नाम-संकीर्त्तन में प्रतिक्षण बढ़ती हुई प्रीति वाले, पुण्यशील जन इस भूतल पर दुर्लभ हैं । 125 ।

मूल— मुरलीरवेण मदयन् भुवनानि,
व्रतभंजनेन पशुपालवधूनाम् ।
विपिनेषु पर्यटति यो जलदाभः
स कृपां तनोतु मयि बल्लवराजः ।। 126 ।।

ननु तर्हि कथमेतादृशसंगलाभः । श्रीकृष्णकृपात एवेत्याशयेनाह । स बल्लवराजः श्रीकृष्णो मयि कृपां तनोतु । विस्तारयतु । कीदृशः । जलदाभः मेघश्यामः । पुनः कीदृशः । यो विपिनेषु श्रीवृन्दावनप्रदेशेषु पर्यटति सर्वतो गच्छति । किं कुर्वन् मुरलीरवेण वेणु-नादेन भुवनानि लोकान् मदयन् हर्षयन् । कीदृशेन मुरलीरवेण । पशुपालवधूनां गोप-नारीणां व्रतभंजनेन आर्यधर्मनाशकेन तदनुरागोत्पादनात् । जात्यंतरं कलहंसछन्दः । सजसा सगौ च कथितः कलहंस इति सूत्रं । सगणजगणसगणद्वयैर्गुरुणा च सिद्धयति । 126 ।

अर्थ—श्रीकृष्ण कृपा से ही सत्संग लाभ हो सकता है, अतएव कहते हैं :—जिस वेणुनाद के कारण गोपीजनों ने आर्य-पथ का उल्लंघन कर दिया था, उसी वेणुनाद से त्रिभुवन को मदविह्वल बनाते हुए जो श्रीवृन्दावन में सर्वत्र विचरण करते रहते हैं वे मेघ-श्याम गोपराज नन्दनन्दन मुझ पर कृपा करें । 126 ।

मूल— शयितं निकुंजसदने सखीजनै
रचितोत्पलालिदलतल्पमंडिते।
मिथुनं तडिद्घननिभं परस्परं
दृढरागशृंखलितमानसं भजे ।। 127 ।।

श्रीकृष्णकृपया सत्संगद्वारा तदनुवृत्तिर्भवतीति द्योतयन्मनोरथं कुरुते । अहं मिथुनं भजे सेवे । कीदृशं । तडिद्घननिभं विद्युन्मेघकांति । पुनः कीदृशं । निकुंजसदने निकुंजमंदिरे शयितं सुप्तं । कीदृशे निकुंजसदने । सखीजनैः रचितः कल्पितः उत्पलालिभिः कमलपंक्तिभिर्दलैः पत्रांतरैश्च तासामेव दलैर्वा यस्तल्पः शय्या तेन मंडिते अलंकृते । कीदृशं मिथुनं । परस्परं दृढो यो रागः स्नेहस्तेन शृंखलितं बद्धं मानसं मनो यस्य तत् । जात्यंतरं प्रबोधिताछन्दः । सजसाजगौ च भवति प्रबोधितेति सूत्रं । सगणजगणसगणजगणैर्गुरुणा च सिद्ध्यति । 127 ।

अर्थ—दामिनी और मेघ के सदृश कान्तियुक्त, पारस्परिक दृढ़ प्रीति की शृंखला में बंधे हैं मन जिनके, ललितादि सखियों द्वारा कमल-दलों से सजाई गई सेज पर निकुंज भवन में शयन करते हुए युगल मेरे भजनीय हों । 127 ।

मूल— स्फुटतरभूरिगुणं महागुणाढ्याः
परमरसैकघनं रसार्द्रचित्ताः ।
निरतिशयं करुणं कृपातितंत्रा
मनसि हरिं दधते न ये तु मंदाः ।। 128 ।।

भजनप्रवृत्तानां तु हृदि सदा भगवद्विजृंभणोचितगुणवैलक्षण्यं द्योतयन्नाह । एवंभूता मनसि हरिं दधते धारयंति । न तु ये मंदा दुर्भगाः । कीदृशं हरिं । स्फुटतरा अतिप्रकटा भूरयो बहवो गुणा वात्सल्यौदार्य्यादयो यस्य तं । ते कीदृशाः । महागुणाढ्या महांतः सर्वाधिका ये गुणास्तैराढ्या युक्ताः । कीदृशं हरिं । परमः अनवच्छिन्नो रसः स्नेहस्तदेकघनं तदेकमूर्त्ति । ते कीदृशाः । रसेन आर्द्रं स्निग्धं चित्तं येषां ते । पुनः कीदृशं हरिं । निरतिशयं सर्वाधिकं यथास्यात्तथा करुणं कृपालुं । ते कीदृशाः । कृपातितंत्राः करुणातिवशगाः । आत्मनो हिताहितमप्रेक्ष्य परेषु कृपाविधायका इत्यर्थः । जात्यंतरं मृगेन्द्रमुखं छन्दः । भवति मृगेन्द्रमुखं नजौ जरौ ग इति सूत्रं । नगणेन जगणद्वयेन रगणेन गुरुणा च सिद्ध्यति । 128 ।

अर्थ—वत्सलता, उदारता आदि अनेक प्रकट गुणों से विभूषित, अखण्डित रस

के स्वरूप सबसे अधिक करुणाशील, नन्दनन्दन प्रभु का ध्यान समस्त गुणों के आलय, रस से भीजे हुए हैं चित्त जिनके, अपने हिताहित को न देखकर अत्यंत दया करने वाले सन्तजन कर पाते हैं, मन्दभागी जन नहीं। 128।

मूल— सांद्रस्नेहेन द्रुततरहृदयाः सख्यो,
राधां शय्यान्ते प्रियनिकटविकाराढ्याम्।
दृष्ट्वा निर्यान्त्यः सुरतसदनतो भव्यै-
र्ध्येयास्ताः कैश्चिन्नसुलभबहुपुण्यौघैः ॥ 129 ॥

परमरहस्यध्यानांतरपरान् बहु मनुते। ताः सख्यः कैश्चिद्विरलैर्ध्येयाः ध्यातव्याः। कीदृशैः। नसुलभबहुपुण्यौघैः। न सुलभः अन्यैर्न प्राप्यो बहुपुण्यानामोघः पुंजो येषां तैः। पुनः कीदृशैः। भव्यैर्मंगलरूपैः। ताः कीदृश्यः। सुरतसदनतः सुरतक्रीडासंकेतात् निर्यांत्यः निःसरंत्यः। किं कृत्वा। शय्यांते शयनीयनिकटे राधां दृष्ट्वा। कीदृशीं। प्रियनिकटविकाराढ्यां प्रियस्य श्रीकृष्णस्य निकटेन समीपेन ये विकारा रोमांचादयस्तैराढ्यां युक्तां। विकारदर्शनेन रंतुमनुकूलां ज्ञात्वेति भावः। कीदृश्यस्ताः। सांद्रस्नेहेन गाढानुरागेण द्रुततरं अतिद्रवीभूतं हृदयं यासां ताः। चतुर्दशाक्षरं असंवाधा छंदः। मो गो गो नौ मः शरनवभिरसंवाधेति सूत्रम्। मगणेन गुरुद्वयेन नगणद्वयेन मगणेन च सिद्धयति। 129।

अर्थ—निभृत निकुंज में श्यामसुन्दर के साथ शय्या पर विराजमान प्रियाजी के श्रीअंग में रोमावलि को देखकर बाहर निकलती हुई प्रगाढ़ स्नेह से द्रवित हो रहा है चित्त जिनका, ऐसी मंगलरूपी सखियाँ ध्यान करने योग्य हैं, किन्तु इनका ध्यान सर्वसाधारण के लिए सुलभ नहीं है। अनेकानेक पुण्यों के समूह जिन्होंने अर्जित कर लिए हैं उन्हीं मङ्गलमयजनों के लिए संभव है। 129।

मूल— माधुर्यसिंधुरमलच्छविसारसिंधु-
र्लावण्यसिंधुरखिलाद्भुतकेलिसिंधुः।
चातुर्यसिंधुरतिवेलदयैकसिंधु-
र्जीयादसौ रसिकवृन्दसुदैवसिंधुः ॥ 130 ॥

निश्चितसेव्यस्योत्कर्षमाशास्ते। असौ जीयात्स्वभजनरसाविष्कारणेन प्राधान्येन वर्त्ततां। कीदृशः। माधुर्यसिंधुः रसिकतासागरः। पुनः कीदृशः। अमला निर्मला या छविर्दीप्तिस्तस्याः सारः सत्त्वं तस्य सिंधुः। पुनः कीदृशः। लावण्यं चेष्टा-

चमत्कारस्तस्य सिंधुः । पुनः कीदृशः । अखिलानां आश्चर्यक्रीडानां सिंधुः । पुनः कीदृशः । चातुर्य्यस्य नैपुण्यस्य सिंधुः । गुणसम्पन्नतायामप्यार्द्रत्वमाह । अतिवेल-दयैकसिंधुः । अतिवेला अत्यर्था या दया तदेकसिंधुः । पुनः कीदृशः । रसिकानां रस-ज्ञानां वृंदं समाजस्तस्य सुदैवस्य शोभनभाग्यस्य सिंधू रसावधित्वात् । जात्यंतरं बसंततिलका छन्दः । उक्ता वसंततिलका तभजा जगौ ग इति सूत्रं । तगणभगणजगणद्वयगुरुद्वयैः सिद्ध्यति । सिंहोद्धता क्वापि । 130 ।

अर्थ—रसिकता के सागर, निर्मल छवि के सार सिंधु, अंग-अंग में तरंगायमान हैं लावण्य के उदधि जिनमें, अद्भुताद्भुत विलासों के समुद्र, निपुणता के निधि, असीम दया के वारिधि और रसिक समाज के भाग्य रत्नाकर यह रसभजनीय (मिथुन) सदा सर्वदा चिरंजीवी रहें । 130 ।

मूल— अविदितपरिमाणता मुनिपालिभि-
निविडसुखमयात्मवृक्षलताश्रया ।
अनवधिगुणराधिकाभिमतास्पदं
भवतु मम सहायिका विपिनस्थली ।। 131 ।।

नन्वसौ कुत्र वर्त्तते । श्रीवृन्दावने इति द्योतयंस्तत्स्थानं स्वसाहाय्ये निक्षिपति । विपिनस्थली श्रीवृन्दावनस्य स्थली मम सहायिका सर्वसुखसंपादिका भवतु । कीदृशी । मुनिपालिभिर्मुनिपंक्तिभिरविदिता न ज्ञाता परिमाणता परिमितिभावो यस्याः सा । तत्र हेतुगर्भं विशेषणं । पुनः कीदृशी । निविडं घनं यत्सुखं तदेवात्मा स्वरूपं येषां तादृशा वृक्षा लताश्चतासामाश्रयः स्थितिर्यस्यां सा । पुनः कीदृशी । अनवधयोऽपारा गुणा यस्य तादृशो यो राधाभिमतः श्रीकृष्णस्तस्य आस्पदं स्थानं । जात्यंतरं अपराजिता छन्दः । नन रसलघुगैः स्वरैरपराजितेति सूत्रं । नगणद्वयरगण-सगणैर्लघुगुरुभ्यां च सिद्धचति । 131 ।

अर्थ—मुनिगण भी जिसके परिमाण को नहीं जान पाते, परिपूर्ण सुख और आनन्द के स्वरूप वृक्ष एवं लताओं से व्याप्त, अनंत गुणों की खान, श्यामसुन्दर को प्रिय श्रीवृन्दावन की भूमि मेरी सहाय होवे । 131 ।

मूल— सुखयति सुभृशं हरिगुणकथनं
व्यथयति च तरां तदितरभणितिः ।
यदमलहृदयं बहुतरसदयं
जनुषि जनुषि किं तदनुगतिरहम् ।। 132 ।।

ननु तत्साहाय्येन किमभिलष्यते रसिसकजनानुराग एवेत्याशयेनाह। अहं जनुषि जनुषि जन्मनि जन्मनि तदनुगतिः तेषां सेवकः किं भवेयमित्यर्थः। केषां हरिगुण-कथनं हरिगुणकीर्त्तनं कर्तृं यदमलहृदयं येषां निर्मलं हृदयं कर्मभूतं सुभृशं अत्यर्थं सुखयति। तदभिनिविष्टत्वात्। तदितरभणितिस्तदन्यविषयवार्त्ता च। व्यथयति-तरां अतिशयेन खेदयति। अनभिनिवेशात्। कीदृशं। यदमलहृदयं बहुतरं यथास्यात्तथा। सदयं अतिकरुणमित्यर्थः। जात्यंतरं प्रहरणकलिका छंदः। ननभनलगिति प्रहरणकलिकेति सूत्रं। नगणद्वयेन भगणनगणाभ्यां लघुगुरुभ्यां च सिद्ध्यति।132।

अर्थ—रसिकजनों के अतिरिक्त, श्रीवृन्दावन-रज-रानी से और भला किस प्रकार की सहायता वांछनीय हो सकती है। इस आशय से कहते हैं:—
सदैव भगवत्-गुण-कीर्त्तन करते रहने से जिनके हृदय निर्मल हो गये हैं, ऐसे परम दयालु रसिक जनों के द्वारा सम्पादित कार्य मुझे अत्यन्त सुखदायी लगते हैं। गुण-कीर्त्तन के अतिरिक्त जो भी विषय-वार्त्ताएं हैं वे अति कष्टप्रद प्रतीत होती हैं। क्या मैं प्रत्येक जन्म में इन रसिक महानुभावों का अनुगत बन सकूंगा। 132।

मूल— कृष्णालापैर्गच्छति घटिका विद्वद्गीतै-
र्यल्पैः पुण्यैर्नैव सुलभा सा किं भाग्यैः।
आवृत्यास्माकं निरवधिमोदं कुर्वाणा
भूयात्प्रेष्ठानुग्रहणत एव नु देष्टॄणाम्॥ 133॥

ननु किं तदनुगतित्वेन श्रीकृष्णालापव्यसनितेति द्योतयंस्तदेवाशास्ते। सा घटिका मुहूर्तार्द्धं अस्माकं भाग्यैः कृत्वा आवृत्त्या पौनःपुन्येन प्रेष्ठा अतिप्रिया किं भूयात् भवेत्। सा का या कृष्णालापैः श्रीकृष्णविषयवार्त्ताभिर्गच्छति व्यत्येति पर्याप्नोतीत्यर्थः। कीदृशैः। कृष्णालापैः विद्वद्गीतैः विद्वांसोऽनुभविनस्तैरुक्तैः। श्रीभागवते। संमुखरितां भवदीयवार्त्तामित्याद्युक्तत्वात्। कीदृशी। अल्पैः क्षुद्रैः पुण्यैस्तपोयोगादिभिर्नैव सुलभा दुष्प्रापेत्यर्थः। पुनः कीदृशी। निरवधि मोदं अविच्छिन्ना-नंदं कुर्वाणा संपादयंती। नन्वेतदतिदुष्करं कथं संपद्येत तत्राह। आदेष्टॄणां श्रीगुरूणां अनुग्रहणत एव अनुग्रहादेव। श्रीगुरुकृपातस्तत्त्वज्ञनिरूपितां श्रीकृष्णकथामविच्छेदेन किं शृणुयामिति तात्पर्यं। जात्यंतरं वासंती छन्दः। मात्तो नो मो गौ यदि गदिता वासंतीयमिति सूत्रं। मगणतगणनगणमगणैर्गुरुभ्यां च सिद्ध्यति। 133।

अर्थ—सदैव आनन्द को देने वाली अल्प पुण्यों से जो प्राप्त नहीं होती, विद्वत् भक्तजन जिसका निरन्तर गान करते रहते हैं, श्रीगुरुदेव की कृपा से ही जो सुलभ

होती है, बार-बार वही कही जाने वाली ऐसी कृष्ण-कथा हमारे सद्भाग्योदय के फलस्वरूप आधी घड़ी भी हमको कब अति प्रिय लगेगी। 133।

मूल— वृन्दारण्यममेयं नेयं नानिमेषेणा-
न्यावस्थां मुनिवृन्दैस्तत्त्वज्ञैरनुगेयम्।
श्रीराधाभिमतेनाधिष्ठेयं सततं य-
द्ध्येयं निर्मलबुद्ध्या सातत्येन सुधीरैः॥ 134॥

अन्यानुपदिशन् श्रवणविषयमाह। तद्वृन्दारण्यं सुधीरैरतिमनीषिभिर्निर्मल-बुद्धयांतर्मुखमनसा सातत्येन नैरंतर्येण ध्येयं चिंतनीयं। कीदृशं। श्रीराधाभिमतेन सततं निरंतरमधिष्ठेयं। आश्रयणीयं। अनुवेलं नववदाश्रितत्वाद्भविष्यन्निर्देशः। पुनः कीदृशं। अमेयं अतर्क्यं कुतः अनिमेषेण कालेन अन्यावस्थां विक्रियां। न नेयं न प्राप्यं। पुनः कीदृशं। तत्त्वज्ञैर्मुनिवृन्दैरनुक्षणं गेयं कीर्त्तनीयं। जात्यंतरं लोलाछंदः। द्विः सप्तच्छिदि लोलाम्सौभ्भौ गौ चरणे चेदिति सूत्रं। मगणसगणमगणभगणैर्गुरुभ्यां च सिद्धयति। सप्तसप्ताक्षरैर्यतिः। 134।

अर्थ—श्रीराधावर की आश्रय-भूमि, नाप-जोख से परे, काल के प्रभाव से रहित, तत्त्ववेत्ता मुनिवृन्दों द्वारा प्रतिक्षण कीर्त्तनीय, श्रीवृन्दावन का भजन, असाधारण लोग अन्तर्मुख होकर करते हैं। 134।

मूल— विवृतशफरलीलावलोकातिमुग्धा
चललहरिभुजाव्यक्तफेनस्मितश्रीः।
सरसखगकुलालापरम्या मदीशा
हरिसविधगतौ सूरजा कामिनीव॥ 135॥

तत्रैव विहारविशेषस्थानं सेव्यत्वेन स्मरति। सा सूरजा श्रीयमुना मदीशा मम प्रभ्वी। कीदृशी। हरिसविधगतौ श्रीकृष्णस्य निकटगमने। कामिनीव कामयुक्तेव। तदेवाह। पुनः कीदृशी। विवृताश्चलंतो जवेन जलाद्बहिश्चमत्कृता ये शफरा मीनास्तेषां लीला विलासः सैवावलोको विलोकनं तेनातिमुग्धा परमसुन्दरी। पुनः कीदृशी। चला लहर्य्यस्तंरगा एव भुजा यस्याः सा। पुनः कीदृशी। व्यक्तः स्फुटो यः फेनस्तदेव स्मितं मंदहासस्तस्य श्रीः शोभा यस्याः सा। पुनः कीदृशी। सरसाः सस्नेहा ये खगाः पक्षिणस्तेषां कुलं वृन्दं तस्यालापेन भाषणेन रम्या रमणीया भर्त्तुरुपकंठे कामिन्यप्येवंलक्षणा भवति ततः पक्षे तथा व्याख्येयं। जात्यंतरं नांदीमुखी छंदः।

**स्वरभिदि नौ तौ च नांदीमुखी गाविति सूत्रं। नगणद्वयेन तगणद्वयेन गुरुभ्यां च सिद्ध्यति। स्वरैरिति सप्तभिरेव यतिः। 135।**

अर्थ—वेग से उछलती हुई मछलियाँ ही मानों जिनके नेत्र हैं, उन्हीं से देखती हुई परम सुन्दरी की भाँति, लहराती हुई लहरों की भुजाओं को फैलाकर बढ़ती हुई, श्वेत फेन (झाग) के द्वारा मुस्कान की शोभा को बिखेरती हुई, तथा तटवर्ती सारस पक्षियों के कलरव के माध्यम से बातचीत करती हुई नन्दनन्दन के समीप आई हुई कामिनी के समान श्रीयमुना जी मेरी ईश्वरी हैं। 135।

मूल— **अलिभयचकितनयनमपिदधती**
**मुखमधिरमणमनुगततनुलता ।**
**प्रियमृदुहसितनिजभुजधृतगला**
**मयि शुभमनुवितरतु हरिरमणी ॥ 136 ॥**

**किं च। हरिं रमयति निजविलासैः क्रीडयतीति। हरिरमणी श्रीराधा मयि। शुभं जनानुरागरूपं मंगलं अनुवितरतु अनुक्षणं ददातु। नामार्थव्यंजकविशेषणानि। कीदृशी। मुखं वदनं अपिदधती कराभ्यामाच्छादयंती। कीदृशं मुखं। अलिभ्यः संमुखमापतिष्णुभ्रमरेभ्यो यद् भयं तेन चकिते विह्वले नयने यस्मिंस्तत्। पुनः कीदृशी। अधिरमणं रमणे श्रीकृष्णे अनुगता प्राप्ता तनुलताय स्याः। भयेन तदवष्टंभनात्। पुनः कीदृशी। प्रियेण मृदु हसितं यथा तथा मृदु भुजाभ्यां धृतः आलिंगितो गलः कंठो यस्याः सा। पंचदशाक्षरं शशिकला छंदः। गुरुनिधनमनु लघुरिह शशिकलेति सूत्रं। अनुक्रमलघुभिरंतिमेनैकेन गुरुणा च सिद्ध्यति। 136।**

अर्थ—भ्रमरों के समीप आ जाने के कारण, श्रीजी के नेत्र भय से विह्वल हो गए। दोनों हस्त-कमलों से उन्हें मूंदकर, प्रियतम के श्रीअंग में समा जाने के लिए चेष्टा करने लगीं। इस अवस्था को देखते हुए मुस्कराते हुए प्रिय ने अपने मृदु बाहु-युगल उनके कंठ में डाल दिये। ऐसे हरि की रमणी श्रीराधा प्रतिक्षण भजन में अनुराग प्रदान करती हुई मेरा मंगल करें। 136।

मूल— **अयि मयि किमु गुणवति सखि तरलो**
**हृदयजरतिमनुवहति सुयुवतेः।**
**श्रवसि वचनमुपदधदिति कथय-**
**न्निदमृतमिति विवृतहरिरवतु वः ॥ 137॥**

लीलाविशेषं स्मरन्नन्यानप्यनुजिघृक्षति । इति कथयन् । विवृतो हरिर्निजरूपेण प्रकटितः श्रीकृष्णः अनेन पूर्वसखीवेषोऽनुमेयः वो युष्मानवतु रक्षतु । इति किंप्रिये इदं यदुच्यते तद् ऋतं सत्यमेव किं कुर्वन् । सुयुवतेः श्रीराधाया इति वचनं श्रवसि कर्णे । उपदधत् । धारयन् । शृण्वन्नित्यर्थः । इतीति किं । अयि अहो सखि परेंगितज्ञत्वादिगुणविशिष्टे स तु कांतस्तरलश्चपलो मयि हृदयजरतिं हृद्यस्नेहं किमु अनुवहति करोति । गुणवत्त्वात्सखीत्वाच्च भवतीमेवात्र विश्वसानीति भावः । इति प्रश्नोत्तरं ददेव प्रकटित इत्यर्थः । जात्यंतरं स्रक् छन्दः । स्रगियमपि च रस नवरचितयतिरिति सूत्रं । इयमेव शशिकला । रसैः षड्भिर्नवभिश्चाक्षरैर्यतिः । 137 ।

अर्थ—एक वार नन्दनन्दन सखीवेष बनाकर प्रियाजी के समीप आए। उनसे बातों ही बातों में वे बोलीं--"गुणवन्ती सखी ! तुम श्यामसुन्दर के अंतर की सब जानती हो। अतएव मुझसे कहो कि चंचल लालजी मुझे हृदय से प्रेम करते हैं ?" युवति-शिरोमणि श्रीराधारानी के वचन सुनकर लालजीने अपने रूप को प्रकट कर दिया और बोले--"प्रिये! तुम ठीक कहती हो। सचमुच मैं तुम्हें प्राणों से भी अधिक चाहता हूँ" । 137 ।

मूल— त्वमतिकठिनहृदि कलयसि कपट-
महमविषमहृदि गतघृणमियति ।
सजलभरनयनमसकलकथिते
तनुमवदधदिदमवतु वकरिपुः ।। 138 ।।

श्रीकृष्णव्यक्तौ रसांतरावस्थां द्योतयन् जगद्धितं वांछति वकरिपुः श्रीकृष्ण इदं विश्वं अवतु रक्षतु । किं कुर्वन् । तनुं तन्वीं अवदधत् बाहुस्वस्तिकया धारयन् । क्व सति । इयति । एतावति सकलं अपर्य्याप्तं यथा तथा कथिते उक्ते सति कथं सजलभरनयनं जलाधिक्येन सहिते नयने यत्र कर्मणि तथा । कियति । कथिते हे धूर्त्त । अतिकठिने हृदि हृदये त्वं कपटं कलयसि धारयसि अहं तु अविषमे सरले हृदि गतघृणं निष्कृपं त्वां धारयामीति कंठे वाष्पनिरोधात् । कर्मविशेष्यक्रियापदयोरनुक्त्या पर्याप्तत्वं । जात्यंतरं मणिगुणनिक रं छंदः । वसुमुनियतिरिति मणिगुणनिकर इति सूत्रं । वसुभिरष्टभिर्मुनिभिः सप्तभिश्चाक्षरैर्यतिर्यस्य सोऽयम् । 138 ।

अर्थ--श्यामसुन्दर के इस प्रकार स्वयं को प्रकट कर देने से रसान्तर हो गया। स्वामिनी जी कहने लगीं, आप तो बड़े कठोर हैं, सदैव छल करते रहते हैं और मैं हूँ भोली । बस इतना ही कह पाईं और उनके नेत्रों में आँसू भर आये। इस अवस्था में श्रीजी के श्रीअंग को संभालते हुए नन्दनन्दन जगत् की रक्षा करें। 138 ।

मूल— जलदमरकताश्मश्यामपाथोजराजी
दलितमसिरुचीनां गौणतामुन्नयन्ती ।
तडिदमलसुवर्णस्वच्छकिंजल्कलोध्र-
च्छविरुदयतु मेऽन्तः कृष्णराधाङ्गशोभा ।। 139 ।।

तादृशरसविशिष्टौ तौ ध्यानांगत्वेन स्मरति । मे मम अंतः अभ्यन्तरे मनसीत्यर्थः । कृष्णराधांगशोभा उदयतु प्रकाशतां । क्रमेण विशिनष्टि । जालदश्च मरकताश्मा नीलमणिश्च श्यामपाथोजराजी नीलकमलपंक्तिश्च दलिता जलादिना पिष्टा या मसिः कज्जलं च तासां । रुचीनां कांतीनां गौणतामप्राधान्यं उन्नयंती अतिश्यामेत्यर्थः। पुनः कीदृशी । तडित् विद्युत् अमलं दाहोत्तीर्णं सुवर्णं च स्वच्छा ये किंजल्काः केसराश्च लोध्राणि लोध्रपुष्पाणि च तेषां छविरिव छविर्यस्याः सा । अत्र जलदादिषु तडिदादीनां यथाक्रमं संयोगशोभाविशेषो ज्ञेयः । जात्यंतरं मालिनी छंदः । ननमयययुतेयं मालिनी भोगिलोकैरिति सूत्रं । नगणद्वयेन मगणेन यगणद्वयेन च सिद्ध्यति । भोगिभिरष्टभिर्लोकैः सप्तभिश्चाक्षरैर्यतिः । 139 ।

अर्थ––मेघ, पन्ना, नील कमलों की पंक्ति और स्निग्ध कज्जल की कांति को फीकी करती हुई नन्दनन्दन के श्रीअंग की शोभा, तथा दामिनी, विशुद्ध स्वर्ण, स्वच्छ केशर और लोध्र के फूल की छवि को विनिन्दित करती हुई राधारानी के श्रीअंग की शोभा मेरे अंतःकरण में उदित होवे । 139।

मूल— पश्यामः कृष्णं भास्वत्कन्याकूले खेलासक्तं
श्रीराधावक्त्रे न्यस्तापांगं वंशीवाद्ये दक्षम् ।
पूर्णो देवो यद्यासन्नश्चित्ते किम्वान्यैः क्षुद्रः
क्षुद्राणामीशैरीशाभासैर्नैवं चेत्किम्वान्यैः ।। 140 ।।

मनोरथांतरं कुरूते । वयं कृष्णं पश्यामः । कीदृशं भास्वत्कन्याकूले यमुनाकूले खेलासक्तं क्रीडाव्यसनिनं । पुनः कीदृशं । श्रीराधावक्त्रे न्यस्तः अर्पितोऽपांगो येन तं । पुनः कीदृशं । वंशीवाद्ये दक्षं चतुरं । नन्वन्येऽपि देवाः संति तत्राह । पूर्णः देशकालाद्यपरिछिन्नः देवः । सर्वगुणैः दीप्यमानः श्रीकृष्णो यदि चित्ते आसन्नः सेव्यतया संकल्पितोऽपि तर्हि अन्यैर्देवैः किंवा न किमपि कीदृशैः क्षुद्रैस्तुच्छैर्देशकालादिपरिछिन्नैरित्यर्थः। पुनः कीदृशैः। ईशाभासैः। अज्ञानिषु ईश इत्याभासो येषां तैः। यद्वा। ईशेन परमेश्वरेण आभासन्ते द्योतंते। ननु केचित्तथा मन्यंते। तत्राह क्षुद्राणां कामिनामीशैस्तैरीश्वरत्वेन व्यतिरेकेऽस्य किंचित्करत्वमाह। नैवमिति। एवं न चेत्तर्ह्यन्यैः किं वा नि-

विघ्नेऽपि तद्भजने पुनर्विषयनिपातात् । तथा च श्रुतिः अंधं तमः प्रविशंति ये संभूतिमुपासते इति । जात्यंतरं लीलाखेलच्छंदः । एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेल इति सूत्रं । एकाक्षरन्यूनाभ्यां विद्युन्मालापादाभ्यां सिद्ध्यति ।140।

अर्थ—यमुना-तट पर क्रीडारत, राधारानी के मुखचन्द्र को निहारते हुए, वंशी बजाने में निपुण पूर्ण पुरुषोत्तम श्यामसुन्दर का यदि हम दर्शन करते हैं तो उन्हीं की सत्ता से अस्तित्वधारी अन्यान्य-देशकालादि से परिच्छिन्न देवताओं के सेवन से भला क्या लाभ! (ऐसे देवों का सेवन सांसारिक भोगों का ही देने वाला होता है, प्रीति का नहीं ।) । 140।

मूल— निखिलनिगमैर्निगदितं समस्तोत्तमं
सुविवृतमहो तथाऽगमैर्महद्भिः कृतम् ।
चरणभजनं मुरजितस्तथाप्यासुर–
प्रकृतिनिरतैर्न परिचीयते चंचलैः॥ 141 ॥

नन्वेवं प्रसिद्धौ सर्वे किमिति न मन्यंते । तत्राह । अहो आश्चर्यं मुरजितः श्रीकृष्णस्य चरणभजनं आसुरी चासौ प्रकृतिः स्वभावस्तस्यां निरतैरभिनिविष्टैरत एव चंचलैर्विषयरसलंपटैस्तथापि न परिचीयते न ज्ञायते परिचयाभावे कानुष्ठानकथेति भावः । कीदृशमपि निखिलनिगमैः सर्ववेदैः समस्तोत्तमं यथा तथा निगदितं स्पष्टमुक्तं । तथा च श्रुतयः । चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूता अपि पाप्मानमरातिं प्रतरेम । लोकस्य द्वारमर्चिष्मत्पवित्रं ज्योतिष्मद्भाजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधात्वित्याद्युत्कर्षवर्णनेन भजनमुपदिशंति । तथा आगमैरागमशास्त्रैः सुतरां मंत्रपूजाप्रकारनिरूपणैर्विवृतं स्पष्टीकृतं । पुनः कीदृशं । महद्भिः शिवादिभिः कृतं आचरितं । एवं शास्त्रसदाचारप्रसिद्धमपि भगवद्भजनं ये न परिचिन्वंति ते भक्तापराधदूषिता आसुरस्वभावा एवेति ज्ञेयमिति भावः । उक्तं च शिष्टैः । त्वां शीलरूपचरितैः परमप्रकृष्टसत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रैः । प्रख्यातदेवपरमार्थविदां मतैस्तैर्नैवासुरप्रकृतयः प्रभवंति बोद्धुमिति । जात्यंतरं विपिनतिलकं छंदः । विपिनतिलकं नसनरेफयुग्मैर्भवेदिति सूत्रं । नगणसगणनगणरगणद्वयैः सिद्ध्यति । 141 ।

अर्थ—अहो! श्रीकृष्ण के चरणों के भजनक्रम का इस आसुरी प्रकृति में अभिनिवेश रखने वाले चंचल तथा विषयलम्पट लोगों द्वारा परिचय प्राप्त नहीं किया जा सकता, जो भजन वेदों द्वारा सबसे उत्तम बताया गया है तथा जो महान् आगमों द्वारा विस्तार पूर्वक वर्णन किया गया है। 141 ।

मूल— यामुने तटे निकुंजवीथिकासु राधया
चंचलाभया युतं घनाभमिष्टवर्षिणम्।
वंशनादगर्जितं सुरेशकार्मुकच्छविं
वर्हमंडलं दधानमार्तिनाशनं भजे ॥ 142 ॥

अलं तेषां वार्त्तयापि स्वविधेयमुनसरामीत्याह । यामुने तटे यमुनातीरे निकुंजवीथिकासु कुंजश्रेणीषु विषये तं घनाभं मेघद्युतिमहं भजे सेवे । कीदृशं । राधया युतं संयुक्तं । कीदृश्या । चचंलाभया तडित्प्रभया । पुनः कीदृशं । इष्टवर्षिणं । वांछितप्रदं । पुनः कीदृशं । वंशनाद एव गर्जितं यस्य तं । पुनः कीदृशं । वर्हमंडलं पिच्छचूडां दधानं । शिरसि धारयंतं । कीदृशं वर्हमंडलं । सुरेशकार्मुकछविं । इन्द्रधनुर्दीप्ति । पुनः कीदृशं तं । आर्त्तिनाशनं क्लेशच्छिदं । जात्यंतरं तूणिकं छन्दः । तूणिकं समानिका पदद्वयं विनांतिममिति सूत्रं । 142 ।

अर्थ—यमुनातटवर्ती कुंजगलियों में क्लेश हरने वाले श्यामसुन्दर का मैं भजन करता हूँ जो राधा के साथ दामिनी-सहित घन की भाँति सुशोभित हो रहे हैं । यह श्यामघन वांछित रस की वर्षा करते हैं । वंशीनाद ही इनका गर्जन है । सिर पर धारण किया हुआ मयूरपिच्छ ही यहां इन्द्रधनुष का भ्रम उपजाता रहता है । 142 ।

मूल— भक्तेभ्यस्ते सुकीर्तिर्विश्वे विकाशं प्रयाता
लोको विद्यां ययैवच्छित्वा परं याति सौख्यम्।
सर्वस्वं तेऽपि ते किं कालोरगग्रस्तनृणां
श्रीमद् वृन्दावनेन्दो ! कस्तान्न सेवेत धीमान् ॥ 143 ॥

ननु तद्व्रजजनमतिदुर्लभं कथं संपद्येत तदनुरागिजनसेवात एवेत्याशयेनाह । हे श्रीमद् वृन्दावनेन्दो तान् भक्तान् धीमान् बुद्धिमान् को न सेवेत । अपितु सर्वैः सेवेत । कान् येभ्यो भक्तेभ्यः सकाशात् । ते तव सुकीर्तिः शोभनं यशः विश्वे जगति विकासं प्रयाता प्रकाशङ्गता तद्द्वारा प्रकटितेत्यर्थः । कीदृशी कीर्तिः । यया कीर्त्यैव लोको निर्विशेषः सर्वो जनः अविद्यां अविवेकं छित्वा विनाश्य परं उत्कृष्टं सौख्यं भजनानंदं याति प्राप्नोति नान्यथा । अतस्ते भक्तास्तवापि सर्वस्वं अतिप्रिया इत्यर्थः काल एवोरगः सर्पस्तेन ग्रस्ता ये नरास्तेषां सर्वस्वमिति किं वाच्यं । जात्यंतरं

चंद्रलेखा छन्दः । म्रौ मो य्लौ गौ भवेतां सप्ताष्टकैश्चंद्रलेखेति सूत्रं । मगणरगण-मगणयगणैर्लघुना गुरुभ्यां च सिद्धयति । सप्तभिरष्टभिश्चाक्षरैर्यतिः । 143 ।

अर्थ—हे श्रीवृन्दावन के चन्द्रमा! जगत् की अविद्या और अविवेक को नष्ट करके आपका जो यश, भजनानंद का सुख प्रदान करता है, उस यश का विस्तार करने वाले—काल सर्प से ग्रसे हुए सांसारिक लोगों के सर्वस्व एवं आपके भी प्रिय रसिक भक्तजनों का, ऐसा कौन बुद्धिमान है जो सेवन नहीं करता? । 143 ।

मूल— श्रीराधाजानिं देवं दीव्यन्तमादित्यजांते-
नुक्रोशैकव्यग्रभक्तालीषु पूर्णानंदाब्धिम्
सारं वेदाम्भोधीनां लग्नातु मे चित्तवृत्ति-
र्नो जानीमः कर्तव्यं किं न कर्तव्यमन्यत् ॥144॥

तत्सेवाफलितं सूचयति । तं देवं मे चित्तवृत्तिर्लग्नातु अभिनिविशतां । कीदृशं श्रीराधाजानिं । श्रीराधा जाया पत्नी यस्य तं । पुनः कीदृशं । आदित्यजांते यमुना-समीपे दीव्यंतं क्रीडंतं । ननु तव चित्ते लग्नेऽपि तस्य निरतिशयैश्वर्य्यादनुसन्धानं चेन्न भवेदित्याशंक्य विशिनष्टि । पुनः कीदृशं । भक्तालीषु भक्तश्रेणीषु । अनुक्रोशैक-व्यग्रं अनुकंपैककातरं । ननु ततः किमिच्छसि न किमपि तस्यैव परमपुरुषार्थत्वा-दित्याशयेन विशिनष्टि । पुनः कीदृशं पूर्णानंदाब्धिं अविच्छिन्नानंदसमुद्रं । ननु कुतो ज्ञातमिति तत्राह । सारमिति । वेदांभोधीनां । वेदा एवांभोधयः दुर्विगाहार्थत्वात् । तेषां सारं तत्त्वं वेदनिर्णीतमित्यर्थः । ननु वेदास्तु विधिनिषेधपराः सत्यं । तथा-त्वं तु तेषां अज्ञं प्रति । अस्माकं तु तावन्नैव ज्ञातमित्याशयेनाह । नो जानीम इति । वयं अतः अन्यत् किं कर्तव्यं को विधिः । एतद्वैमुख्यादन्यत् किं न कर्तव्यं को निषेध इति न जानीमः । जात्यंतरं चित्रा छंदः । क्लीबे च चित्रानाम छंदश्चित्रं च त्रयो मा यकाराविति मगणत्रयेण यगणद्वयेन च सिद्धयति । 144 ।

अर्थ—श्रीराधावर यमुनातट पर क्रीडा करते हुए भक्तों पर करुणाशील, पूर्णानन्द-सागर, वेद-समुद्र के सार-सर्वस्व, ठाकुर मेरे अन्तःकरण में कृपा कर प्रवेश करें। इस (अभिलाषा रूप) कर्त्तव्य के अतिरिक्त वेदों में स्थित विधि-निषेधों से मैं सर्वथा अनभिज्ञ हूँ । 144 ।

मूल— वल्लवे कृतानुरागनाशितेन्द्रदर्पयाग
राधिकारसैकचित्त धन्यभक्तवृन्दवित्त ।

त्वां भजामि लोकनाथ विश्वपावनैकगाथ
सर्वदेवताधिदेव भूरिपुण्यलभ्यसेव ॥145॥

एतदेव निवेदयन् श्रीकृष्णं बहुधा संबोधयति। हे श्रीकृष्ण त्वाम् भजामि। कीदृश। बल्लवे गोपे जातावेकवचनं गोपेष्वित्यर्थः। कृतोऽनुरागो येन हे तादृश। पुनः कीदृश। नाशित इंद्रस्य दर्पो यागश्च येन हे तादृश। पुनः कीदृश। राधिकायां यो रसः स्नेहस्तदेकचित्त। पुनः कीदृश। धन्या भाग्यवंतो ये भक्ता तेषां वृन्दं समाजस्तस्य वित्त सर्वस्व। हे लोकनाथ जगत्पते! हे विश्वपावनैकगाथ। सर्वशोधककीर्त्ते। हे सर्वदेवताधिदेव! ब्रह्मरुद्रादिनियंतः। हे भूरिपुण्यलभ्यसेव। भूरि अपरिमितं यत्सदनुकंपाहेतुभूतं पुण्यं तेन लभ्या सेवा यस्य तादृश। षोडशाक्षरवृत्तं चित्रं छन्दः। चित्रसंज्ञमीरितं समानिका पदद्वयं त्वितिसूत्रम्॥ 145॥

अर्थ—गोप-ग्वालों से प्रीति रखने वाले, व्रजवासियों की प्रतिष्ठा को बढ़ाने के हेतु इन्द्र के दर्प और यज्ञ को नष्ट करने वाले, श्रीराधारस में दत्तचित्त, भाग्यशाली भक्तवृन्द के सर्वस्व, अपनी कथा से विश्व को पवित्र करते हुए, प्रभूत पुण्यों से ही जिनकी सेवा सम्भव हो पाती है, ऐसे हे जगत्पते! देवाधिदेव! मैं आपका भजन करता हूँ॥ 145॥

मूल— त्वन्मुरलीरवेण सह चरितचलदृशा
निर्भरकर्वुरेण गलदधरपुटरसैः
व्याप्नुवता मुकुन्द सकल-भुवनविवरं
किं मम कर्णरंध्रमुपनदि नु सुखयिता ॥146॥

मनोरथांतरं। हे मुकुन्द! उपनदि नद्याः श्रीयमुनायाः समीपे त्वं मुरलीरवेण मम कर्णरंध्रं किं नु सुखयिता सुखयिष्यसे। कीदृशेन। सहचरितचलदृशा सहचरिते सहचरितत्वं प्रापिते चले चंचले दृशौ नेत्रे येन दृग्विलासयुक्तेनेत्यर्थः। पुनः कीदृशेन। गलदधरपुटरसैः। गलंतः स्रवंतो येऽधरपुटरसा अधरामृतद्रवास्तैर्निर्भरकर्वुरेण अत्यंतमिश्रितेन। ननु सन्निहितो भूत्वा एतत्संपादयेति चेत्तत्राह। अखिलभुवनविवरं सकलब्रह्मांडान्तरालं उपलक्षणं। आवैकुण्ठमपि व्याप्नुवता संचरता। अतोऽत्र श्रवणे न सन्निकर्षो हेतुः। किंतु त्वत्कृपैवेत्यर्थः। जात्यंतरं ऋषभगजविलसितं छंदः। भ्रत्रिनगैः स्वरात् खमृषभगजविलसितमिति सूत्रं। भगणरगणनगणत्रयैर्गुरुणाः सिद्धयति॥ 146॥

अर्थ—मुरली बजाने से आपके नेत्र-युगल चंचल हो जाते हैं। अधरों से द्रवित

अमृत रस की भाँति मीठा वंशी-रव अखिल ब्रह्माण्ड के कोने-कोने को भर देता है। हे मुकुन्द! यमुना के तीर पर निकट से ही यह नाद मेरे कानों को कब सुख देगा? ॥ 146 ॥

मूल— ऐन्द्रियकमहो सौख्यं तद्दृष्टिश्रवणविधौ,
मोदयतितरां मूढान्नो पाकावसरगतम्
जीवितमपि सलोलं विद्युद्बुद्बुदसदृशं,
गच्छत शरणं धीराः श्रीराधापतिचरणम् ॥147॥

ये विषयलोलुपतया वैमुख्यमाश्रयंते। तत्र दोषदर्शनेनताननुकंपते। हे जना धीराः सन्तः श्रीराधापतिचरणं शरणं आश्रयं गच्छत ब्रजत। कुतः यतो यदभिमुखास्तदैन्द्रियकं इन्द्रियसंबंधि सौख्यं मूढानविवेकिनस्तत्रापि दृष्टिश्रवणविधौ दृष्टिर्दर्शनं श्रवणं च। तयोर्विधाने मोदयतितरां। अतिशयेन हर्षयति नोपाकावसरगतं। परिणामसमयप्राप्तंसन्न मोदयति। उक्तं च प्रबोधचन्द्रोदये। विषयजरसाः परिणामविरसा इति। भवतु। विचार्य्य संपादनीयमिदम् का त्वरेत्यत आह। जीवितमिति। जीवितं जीवनमपि। सलोलं सम्यक् चंचलं। कीदृशं। विद्युच्च बुद्बुदं च तत्सदृशं। अचिरविनाशित्वादज्ञातगतिकत्वाच्च। जात्यंतरं चकिता छंदः। भात्समतनगैरष्टच्छेदैः स्यादिह चकितेति सूत्रम्। भगणसगणमगणतगणनगणैर्गुरुणा च सिद्धयति अष्टभिरक्षरैश्छेदो यतिः ॥ 147 ॥

अर्थ—विषय-लोलुप जनों पर कृपालु होकर आचार्य-चरण उद्बोधन करते हैं :—

आँख, कान आदि इन्द्रियों से भोगे जाने वाले भोगों से भ्रमित होकर स्वयं को सुखी मानते हुए जो मूढ अंत समय का विचार नहीं करते, वे दुःख पाते हैं। अतः विलम्ब न करके शीघ्रमेव, धीरतापूर्वक श्रीराधावर के चरणकमलों की शरण ग्रहण करनी उचित है, क्योंकि मानव-जीवन, बिजली और बुलबुले की भाँति अतिशय चंचल है ॥ 147 ॥

मूल— विचित्रपल्लवावृते, सुपर्व-भूरुहस्तले,
सुवर्णपुंजपिंजरे प्रशस्त-रत्न-भास्वरे
निषण्णमंकराधिकं सुविद्युदंबुद स्भम्,
सरोमभेदविग्रहं स्मरामि नन्दनन्दनम् ॥148॥

प्रस्तुतमनुसरति । नन्दनन्दनं स्मरामि । कीदृशं । सुपर्वभूरुहः सुरतरोस्तले अधोभागे निषण्णं स्थितम् । कीदृशस्य । सुपर्वभूरुहः । विचित्रा हरितपीतारुणादि-वर्णा ये पल्लवाः किसलयास्तैरावृतिरावरणं यस्य । कीदृशे तले । सुवर्णपुंजपिंजरे । कनकसमूहेन पीतारक्तवर्णे । पुनः कीदृशे प्रशस्तरत्नभास्वरे । निबद्धोत्कृष्टरत्नै-र्देदीप्यमाने । कीदृशं नन्दनन्दनं । अंकराधिकं अंके आक्रोडे स्थिता राधिका यस्य । पुनः कीदृशं । सविद्युदंबुदप्रभं । सतडिन्मेघदीप्तिं श्रीराधासंयोगात् । पुनः कीदृशं । सरोमभेदविग्रहं रोमोद्गमयुक्तशरीरं । तदाश्लेषपुलकितमित्यर्थः । जात्यंतरं पंचचामरं छंदः । प्रमाणिका पदद्वयं वदन्ति पंचचामरम् ।। 148 ।।

अर्थ––नाना रंग के पत्तों से आच्छादित कल्पवृक्ष के नीचे रत्नजटित, देदीप्य-मान सुवर्ण की भूमि पर, श्याम-घन में सुस्थिर विद्युत् की तरह सुशोभित, श्रीराधा को अपने अंक में लेकर पुलकित होते हुए नन्दनन्दन का मैं स्मरण करता हूँ ।। 148 ।।

मूल–– आनीताल्या चिरमनुनयैः शुभ्रांशुवदना,
कुंजद्वारे निहितं चरणं भूयो धृतहठा ।
सख्या दृष्ट्या प्रहितहरिणा दोर्भ्यामवधृता,
श्रीराधा मे वसतु हृदये प्रेमातिविषमा ।। 149 ।।

विलासांतरं स्मरन् मनोरथं कुरुते । श्रीराधा मे हृदि वसतु । कीदृशी । शुभ्रां-शुवदना चंद्रमुखी । पुनः कीदृशी । प्रेमातिविषमा स्नेहेनातिचित्रा । तदेव व्यंजयन् विशिनष्टि । पुनः कीदृशी । चिरमनुनयैः बहुकालप्रसादनैः । आल्या सख्या आनीता संकेतं प्रापिता । पुनः कीदृशी । भूयोधृतहठा । पुनः कृतमानाग्रहा । कथं कुंजद्वारे निहितचरणं दत्तपदं यथास्यात्तथा । पुनः कीदृशी । सख्या तयैव दृष्ट्या नेत्रसंज्ञया प्रहितः प्रेरितो यो हरिस्तेन दोर्भ्यांबाहुभ्यामवधृता शय्यां नेतुमाश्लिष्टा । मदन-ललिता छन्दः । म्भौनोम्नौगो मदनललिता वेदैः षप्तुमिरिति सूत्रं । मगण भगण नगण मगण नगणैरेकगुरुणा च सिद्ध्यति ।। 149 ।।

अर्थ––चन्द्रमुखी प्रियाजी को बड़ी मनुहार करके सखी जिस किसी प्रकारसे निकुंज-द्वार तक लाने में कृत-कार्य हो पाई, किन्तु कुंज-द्वार तक पहुँचकर प्रियाजी फिर मानवती होकर जब वापस लौटने लगीं तो निरुपाय होकर सहचरी ने प्रियतम को आँख के इशारे से प्रेरित किया और वे उन्हें भुज-लताओं से परिवेष्टित करके अन्दर ला सके, ऐसी प्रेम-चित्रिता श्रीराधा मेरे चित्त में निवसित हों ।। 149 ।।

मूल–– भ्रमतु कुतश्चिदेतदिह कर्मभिः शरीरं,
दुरवगमेच्छया तव हरेऽथवा क्व हानिः ।

अविषयनिन्दनग्रहणविह्वलं,
मनो मे रविदुहितुस्तटे विहरतः स्मरेन्नु केलिम् ।। 150 ।।

नन्वेवं मनोरथैः किं संपत्स्यते इत्याशंक्य पुरुषार्थ इत्याशयेन हरिं प्रार्थयते । हे हरे एतत् शरीरं इह भूमौ कुतश्चिद्भ्रमतु कुत्रापि गच्छतु । भ्रमणे हेतुद्वयं साधारणजनानां कर्म्मैव भक्तानां भगवदिच्छैव । उक्तं च उद्धवेन । एते वयं महायोगिन् भ्रमंतः कर्मवर्त्मसु । त्वद्वार्त्तया तरिष्यामस्तावकैर्दुस्तरं तम इति । तथा च शिष्टैः । उत्पथे क्वचन सत्पथेपि वा मानसं व्रजतु दैवदेशितं । देवकीतनय सेवकीभवन्यो भवानि संभवामि किं ततः इति द्वयमेवांगीकृत्याह । कर्मभि : प्राक्तनशुभाशुभैः अथवा तव दुरवगमेच्छया दुर्ज्ञेयाभिप्रायेण कृत्वा उभयत्रापि क्व हानिर्न। क्वापि द्वयोरेवान्यथाकरणानिष्ठत्वात् । किंतु मे मनस्तव केलिं क्रीडां स्मरेन्नु स्मरेत किं । कीदृशस्य रविदुहितुर्यमुनायास्तटे विहरतः क्रीडतः । कीदृशं मनः। अविषय निंदनग्रहणविह्वलं विषयाणां निंदनं दोषबुद्धिर्ग्रहणं तत्ववुद्धयाभिनिवेशस्ताभ्याम् विह्वलमनाक्रांतं उभयथारम्भसंभवात् । उक्तं च भगवता। नातिसक्तो न निर्विण्णो भक्तियोगोऽस्य सिद्धिद इति। जात्यंतरं वाणिनी छंदः । सदा भवति वाणिनी गयुक्तैरिति सूत्रम् । नगणजगणभगणजगणरगणैरेकगुरुणा च सिद्धयति ।। 150 ।।

अर्थ––प्रारब्ध कर्मों के फलस्वरूप अथवा आपकी (न जानी जा सकने वाली) इच्छा के कारण यह तन इस भूमि में कहीं विचरण करता रहे, यह कोई हानि नहीं है, बस इतनी कृपा करें कि विषयों में दोषबुद्धि न होने से जो मन विकल बना रहता है, इस मन में आपकी वह क्रीडा जो श्रीयमुनाजी के तट पर (अनाद्यन्त) चलती रहती है, स्मरण होती रहे ।। 150 ।।

मूल–– क्व यामः किं कुर्मोनुपहतरसास्वाददक्षैः
कथं संगो भूयादनवरतमार्द्रार्द्रचित्तैः ।
वमद्भिस्त्वल्लीलामृतमसकृदास्येन्दुबिम्बै–
र्यदा राधाजाने ! भवति किमतस्ते प्रसादः ।।151।।

ननु तादृशमनोवृत्तेः किं साधनमित्यपेक्षायामाकुलतया । तदेवार्थयते । हे राधाजाने वयं क्व यामः कुत्र गच्छामः किं विधेयं कुर्मः आचरामः । किमर्थमित्यत आह । अनुपहतोऽबाधितो यो रसो भजनानंदस्तस्य आस्वादेऽनुभवे दक्षैस्सह संगो मिलापः कथं भूयात् । केन प्रकारेण भवत् । तथा त्वमेव संपादयेति भावः । कीदृशैरार्द्रार्द्रचित्तैरार्द्रादपि आर्द्रमतिस्निग्धं चित्तं येषां तैः। पुनः कीदृशैः। त्वल्लीलामृतं

तव चरित्रसुधाम। आस्येन्दुबिम्बैः वदनंचंद्रमंडलैः कृत्वा। असकृन्निरंतरम्। वमद्भिः क्षरद्भिः त्वल्लीलाकथनव्यसनिभिरित्यर्थः। ननु यदर्थं संगोऽभिलष्यते। तदेव चेत्संपादयेयं किं संगाग्रहेणेत्यत आह! यदा यर्हि संगो भवति तदा अतः अस्मादपरस्तवापि प्रसादः किं न किमपि एष एव परमानुग्रह इत्यर्थः। जात्यंतरं प्रवरललिता छंदः। यमौ नस्रौ गश्चेत् प्रवरललितम्॥ 151॥

अर्थ––कहाँ जायें? क्या करें? जिससे अखण्डित भजनानंद के आस्वाद में दक्ष, अत्यन्त विगलित मन वाले और जिनके मुख रूपी चन्द्र-बिम्ब से आपकी लीला-कथा झरती है, ऐसे रसिकों का संग प्राप्त हो सके। हे राधाप्रिय! इससे अधिक आपकी कृपा का और कोई रूप नहीं है॥ 151॥

मूल––

जय जय तरणिदुहितृतटरुचिकर,
जय जय पशुपयुवतिधृतरसभर।
जय जय तनुरुचिलघयितजलधर,
ननु मदगणितविगुणमपि परिहर॥ 152॥

ननु भवतः सदोषत्वेन पात्रतैव न संभवतीत्याशंक्य। निजकारुण्येनैव दोषागणन-पूर्वकमनुगृहाणेत्याशयेन बहुधा संबोधयन्नाह हे तरणिदुहितृतटरुचिकर यमुना-तटवासस्पृहयालो। जय जय उत्कर्षमाविष्कुरु। अत्यादरे वीप्सा। हे पशुपयुवतिधृत-रसभर पशुपानां गोपानां युवतिषु धृत आश्रितो रसभरः स्नेहाधिक्यं येन तादृश। जय जय। पुनः कीदृश। हे तनुरुचिलघयितजलधर शरीरकांतितुच्छीकृतमेघ। जय जय ननु अहो मदगणितविगुणमपि ममागणितदोषमपि परिहर मा कलयेत्यर्थः। जात्यंतरं अचलधृति छंदः। द्विगुणितवसुलघुयुगल मचन धृति॥ 152॥

अर्थ––सदोष होने के कारण यदि मैं पात्र न समझा जाऊँ तो आप करुणा के आगार हैं, मेरी अनन्तानन्त त्रुटियों को हरने की कृपा करें। हे यमुनातटविहारी! हे गोपीजनप्रिय! अपनी तन-कांति से मेघद्युति को विलज्जित करने वाले! आपकी जय जयकार होवे॥ 152॥

मूल––

अखिलरसैकसारवपुषे, महा-
माधुरीजलनिधये समस्तगुणपालिकाभूमये।
निरवधिरागशृंङ्खलितराधिकास्यसे
रुचिरनिकुंजवीथिषु विहारिणे नमः॥ 153॥

ननु केन संबंधेन दोषं परिहरामि। प्रणतिमात्रेणेत्याशयेनाह। ते तुभ्यं नमः। कीदृशाय। अखिलरसानां एकं साररूपं वपुर्यस्य तस्मै। पुनः कीदृशाय। महामाधुरी-जलनिधये। अपरिच्छन्नमाधुर्यसागराय। पुनः कीदृशाय। समस्तगुणपालिका-भूमये। सर्वगुणपरम्पराक्षेत्राय। पुनः कीदृशाय। निरवधिरागशृंखलितराधिका-प्रेयसे। अपरिमितस्नेहबद्धराधातिप्रियाय। पुनः कीदृशाय। रुचिरनिकुंजवीथिषु। कमनीयनिकुंजपंक्तिषु विहारिणे क्रीडनशीलाय। जात्यंतरं गरुडरुतं छन्दः। गरुडरुतं नजौ भजततगा यदास्युस्तदा ॥ 153 ॥

अर्थ—सम्पूर्ण रसों के सार से निर्मित है श्रीअंग जिनका, महामाधुर्य के सागर, समस्त गुणों के उत्पत्ति-केन्द्र, श्रीराधारानी की सीमाहीन प्रीति में आबद्ध, कमनीय कुंज-गलियों में बिहरने वाले, आपको बारम्बार नमस्कार है ॥ 153 ॥

मूल— गृहे वासन्तीये चिरमनुनये दत्तमनसः
क्षणं राधावक्त्रं प्रसृमरलसत्कांतिनिलयम्।
करे प्राणेशस्य स्थितमिव विधुः फुल्लनलिने
सकृत्किम्वा रुन्ध्यान्नयनपदवीं भूरिसुकृतैः ॥154॥

मनोरथांतरं कुरुते। राधावक्त्रं राधामुखं मे नयनपदवीं लोचनमार्गं भूरि-सुकृतै रसिकजनानुकंपादिलक्षणैर्बहुपुण्यैस्सकृद्वारमेकं किं वा रुंध्यात् आवृणुयात्। लोचनविषयो भवेदित्यर्थः। क्व वासंतीये माधवीलताविरचिते गृहे मंदिरे। कीदृशं राधावक्त्रं। प्रसरा प्रसरणशीला लसंती चमत्कुर्वंती या कान्तिर्दीप्तिस्तस्या निलयोऽधिष्ठानं। पुनः कीदृशं, प्राणेशस्य श्रीकृष्णस्य करे हस्ते क्षणं स्थितं येन हस्तेधृतमित्यर्थः। कीदृशस्य प्राणेशस्य चिरं बहुकालं अनुनये प्रसादने दत्तमनसः कृतचित्तस्य कुत्र किमिव। फुल्लनलिने विकचपद्मे विधुरिवेत्यभूतोपमा। सप्त-दशाक्षरं वृत्तं शिखरिणी छंदः। रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी ॥ 154 ॥

अर्थ—सहज मानिनी श्रीवृषभानुनंदिनी, माधवीलता-मन्दिर में विराज रही हैं। बहुत काल तक मनाने के बाद, प्रसन्न हो जाने पर प्रियतम ने उनके श्रीमुख को (लाड़ से) इस प्रकार अपने हाथों के मध्य ले रखा है, मानों खिले हुए नील कमलों के बीच चन्द्रमा सुशोभित हो रहा हो। रसिकों की कृपा किं वा प्रभूत-पुण्यों के फल-स्वरूप, झिलमिलाती हुई कान्ति की अधिष्ठान श्रीराधा रानी का यह मुखमण्डल एक बार मेरे नयनगोचर होवे ॥ 154 ॥

मूल— अनन्तकरुणाम्बुधे सुमुखि वार्षभानव्यहो
वरस्तव कदेदृशो भवति देवि लोकोत्तरः।

त्वदीयहृदयेश्वरः स्वपरिचारिकालीषु मां
भवज्जनतया यथाधिकतमादरैर्लोकयेत् ॥ 155 ॥

संबंधस्फुरितां श्रीराधामेव किमप्यर्थयते। हे वार्षभानवि वृषभानुपुत्रि। अनंत करुणांवुधे अपारकृपासागर। सुमुखि शोभनवदने देवि विलासवति। अतिदुर्लभत्वादहो इत्याश्चर्य्ये। तव ईदृशः लोकोत्तर : अलौकिको वरः प्रसादः कदा भवति। कीदृशः। यथा येन प्रकारेण त्वदीयहृदयेश्वरः। स्वपरिचारकालीषु स्वसेवकपंक्तिषु मां भवज्जनतया त्वत्सेवकत्वेन। अधिकमादरैः अतिशयादरैर्लोकयेत् पश्येत्। प्रियसंबंधस्यातिप्रियत्वात्। त्वत्सेवकत्वं संपाद्यतामिति प्रार्थना। जात्यंतरं पृथ्वी छंदः। जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुरिति सूत्रं ॥ 155 ॥

अर्थ—हे अपार करुणा की सागर! हे सुमुखी! हे वृषभानुनन्दिनी! आपके प्राणेश्वर, अपनी परिचारिकाओं में मुझे आपकी प्रिय सखी जानकर, अधिक आदरपूर्वक देखें। अहो, ऐसा लोकोत्तर-कृपा-प्रसाद मुझे कब प्राप्त होगा? ॥ 155 ॥

मूल— वंधुरकेशभृंगवलितं लसदधरदलं
दन्तसुराजकेशरमतीवरसभरचितम्।
सन्ततराधिकामुखहिमांश्वभिमुखविकचं
कृष्णमुखाम्बुजं स्फुरतु नो हृदमलसरसि ॥ 156 ॥

मनोरथान्तरं नोऽस्माकं हृदमलसरसि हृदयनिर्मलसरोवरे। कृष्णमुखांबुजं स्फुरतु। कीदृशं वंधुरा वक्रा ये केशास्तएव भृंगास्तैर्वलितं युक्तं। पुनः कीदृशं लसदधरदलं विराजदधरपत्रं। पुनः कीदृशं। दंतसुराजिकेशरं। दशनशोभनपंक्तिकिंजल्कं। पुनः कीदृशं। अतीव अतिशयेन रसभरेण रसाधिक्येन चित्तं व्याप्तं। पुनः कीदृशं। सततं निरंतरं। राधिकामुखहिमांश्वभिमुखं संमुखं यथास्यात्तथा विकचं प्रफुल्लं। चंद्राभिमुख्येन कमलोत्फुल्लत्वमभूतत्वं। जात्यंतरं। वंशपत्रपतितं छंदः। दिङ्मुनि वंशपत्रपतितं भरनभनलगैरिति सूत्रं ॥ 156 ॥

अर्थ—श्यामसुन्दर के मुख की समता कमल से करते हुए कहते हैं—घूंघर वाली अलकें जहाँ भ्रमर का भ्रम उत्पन्न करती हैं, अरुण अधरोष्ठ जहाँ पंखुड़ियां बनकर रह गई हैं, श्वेत दन्तावली को देखकर लगता है जैसे पंखुड़ी में से केशर निकल रही है, रस की अधिकता से लबालब, और श्रीराधारानी के मुखचंद्र को देखते हुए सदैव खिला रहने वाला (सामान्य कमल से यहाँ विशेषता प्रदर्शित की है) श्रीकृष्ण-मुख-कमल मेरे निर्मल मानस-सर में स्फुरित होता रहे ॥ 156 ॥

मूल—– स्नेहालोकैर्मधुरवचनैर्नर्मभिः श्रेष्ठदानै–
र्दूतीप्रेषैस्तदनुनिभृताकूतविज्ञापनाद्यैः ।
योगैरेभिश्चटुलहृदयः कार्मणे यः प्रियायाः
पायाद् वृन्दाविपिनरसिको नागरेन्द्रः सदा वः ॥ 157 ॥

विलासांतरं स्मरन्नन्येष्वप्यनुकंपयाशिषं प्रयुंक्ते । हे श्रोतृजनाः । स नागरेंद्रो नागरराजः वो युष्मान् सदा पायात् रक्षतु । कीदृशः । यः प्रियायाः श्रीराधायाः कार्मणे वशीकरणे । एभिर्योगैरुपायैश्चटुलहृदयो व्याकुलमनाः । कैः स्नेहावलोकैः स्नेहव्यंजकविलोकनैः तदनु तत्संचारादनंतरं मधुरवचनैः प्रियोक्तिभिस्तच्छ्रवणादनंतरं नर्मभि : परिहासैः । तत्सहनादनंतरं श्रेष्ठदानैः प्रियवस्तुसमर्पणैः । तदादानानंतरं । दूतीप्रेषैः संचारिकाप्रयोजनैः । तद्वार्त्ताभिरुचनादनंतरं निभृताकूतविज्ञापनाद्यैः निभृतो गूढः य आकूतोऽभिप्रायस्तस्य विज्ञापनं निवेदनं तदाद्यं येषां प्रणत्यादीनां तैः । कीदृशः । वृन्दाविपिनरसिकः । श्रीवृन्दावनानुरक्तः । जात्यंतरं मंदाक्रांता छन्दः । मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौगौययुग्ममिति सूत्रं ॥ 157 ॥

अर्थ—–ये नागर-शिरोमणि, श्रीराधा को आकृष्ट करने के हेतु, स्नेह दृष्टि से देखते रहते हैं, हास-परिहास करते हैं, भेंटें अर्पित करते हैं तथा सखी जनों को भेजकर अपने गूढ़ अभिप्राय को कहलवाते हैं—–इस प्रकार के प्रेम-भरे उपायों का प्रयोग करने वाले विकलहृदय, वृन्दावन-रसिक (लालजी) सदैव तुम्हारी रक्षा करें ॥ 157 ॥

मूल—– मृदुलहसितं प्रेंखच्चिल्लिप्रनृत्तविलोचनं
सरसमुरलीरन्ध्रासक्तारुणाधरपल्लवम् ।
कुटिलचिकुरैर्भ्राजद्दण्डस्फुरन्मणिकुण्डलम्
द्युति समधिकं राधाजानेर्मुखं मम लोभनम् ॥158॥

मनोरथांतरं । राधाजानेर्मुखं मम लोभनं लोभजनकं लोलुपोहमित्यर्थः । कीदृशं । मृदुलहसितं मंदहासयुक्तं । पुनः कीदृशं । प्रेंखच्चिल्लि प्रेंखंती आंदोलमाना चिल्ली भ्रूर्यत्र तत् । पुनः कीदृशं । प्रनृत्तविलोचनं । प्रनृत्ते नर्त्तितुमुद्यते विलोचने यत्र तत् । पुनः कीदृशं । सरसमुरलीरंध्रासक्तारुणाधरपल्लवं । सरसं यथा तथा मुरलीरंध्रे वेणुछिद्रे आसक्तो लग्नः । अरुणश्चासावधरपल्लवो यत्र तत् । पुनः कीदृशं । कुटिलचिकुरैश्चूर्णकुंतलैर्भ्राजद् शोभमानं । पुनः कीदृशं । गंडस्फुरन् मणिकुंडलं । गंडयोः कपोलभित्त्योः स्फुरंती चमत्कुर्वती मणियुक्ते कुंडले यत्र तत् ।

पुनः कीदृशं । द्युतिसमधिकं कांत्या सर्वाधिकम् । जात्यंतरं हरिणी छंदः । नसमर-सला गः षड्वेदैर्हयैर्हरिणी मतेति सूत्रं ।। 158 ।।

अर्थ—मन्द-मन्द हंसी से कमान जैसी तनी हुई भ्रृकुटियों से, नृत्य करते हुए चंचल नयनों से, रसीली मुरली के छिद्रों से संलग्न अरुण अधर-पल्लवों से एवं कुटिल अलकों से सुशोभित और मणि-कुण्डलों की चमक से अप्रतिम कान्ति-युक्त श्रीराधापति का मुख-कमल मेरे मन में दर्शनों का लोभ उत्पन्न करता रहता है ।। 158 ।।

मूल— तपनसुतावगुण्ठितसमस्तधरावलया–
सकलपुमर्थदानपटुनिर्जरशाखिकुला ।
परभृतकीरर्वाहिमुखपक्षिरुतै रुचिरा
स्फुरतु वनस्थली हृदि ममाच्युतकेलिखनिः ।।159।।

सकलमनोरथास्पदं श्रीवृन्दावनं स्मरति । वनस्थली मम हृदि स्फुरतु, प्रकाशतां । कीदृशी । अच्युतकेलिखनिः श्रीकृष्णक्रीडोत्पत्तिस्थानं । पुनः कीदृशी । तपन-सुतावगुंठितसमस्तधरावलया यमुनावेष्टितसर्वभूमंडला । पुनः कीदृशी । सकलपुमर्थदानपटुनिर्जरशाखिकुला । सकला ये पुरुषार्थास्तेषां दाने पटु निपुणं । निर्जरशाखिनां सुरतरूणां कुलं यत्र तत् । पुनः कीदृशी । परभृतकीरर्वाहिमुख-पक्षिरुतैः । परभृता कोकिलाः कीराः शुकाः र्वाहणो मयूरास्तत् प्रति पक्षिणां रुतै-र्ध्वनिभी रुचिरा रमणीया । जात्यंतरं । नर्कुटकं छन्दः । यदि भवतो न जौभज-जलागुरू नर्कुटकमिति सूत्रं ।। 159 ।।

अर्थ—सम्पूर्ण मनोरथों को देने वाले श्रीवृन्दावन का स्मरण करते हुए कहते हैं—यह एक खान है, जिससे श्रीनन्दनन्दन की विहार-केलि उत्पन्न होती रहती है, एवं जिसकी भूमि को यमुना जी ने कङ्कणाकार होकर चारों ओर से लपेट रखा है, जो धर्म, अर्थ, काम, मोक्ष, समस्त पुरुषार्थों को देने में समर्थ कल्पवृक्षों से आवृत रहती है, कोकिल, कीर और मयूरों के मधुर-मधुर शब्दों से रमणीय श्रीवृन्दावन की स्थली मेरे मन में प्रकाशित हो ।। 159 ।।

मूल— सुरभिलतालये मणिगणैरतिदीप्ततले,
भ्रमरकुलाकुलप्रसवसंकुलमंजरिभिः ।
उपरि च मण्डले किसलयाचिततल्पयुते,
स्मरति कृती हरिं सविधराधिकमालिवृतम् ।।160।।

तत्रैव स्थल विशेषे ध्यानविशेषं परं बहु मनुते। कृती पुण्यवान। सुरभिलतालये। माधवीलतासदने हरिं स्मरति। कीदृशं। सविधराधिकं। सविधे पार्श्वे राधिका यस्य तं। पुनः कीदृशं। आलीवृतं सखीमंडलवेष्टितं। कीदृशे सुरभिलतालये। मणिगणैर्मणिनिकरैरतिदीप्तं समुज्वलं तलमधोभागो यस्य तस्मिन्। पुनः कीदृशे। किशलयाचिततल्पयुते नवीनदलकल्पितशय्यायुक्ते। पुनः कीदृशे। भ्रमरकुलैराकुला व्याप्ता ये प्रसवा मुकुलास्तैः संकुला व्याप्ताश्च ता मंजर्यस्ताभिश्च उपरि ऊर्द्ध्वं मंडिते। जात्यंतरं कोकिलकं छंदः। हयऋतुसागरैर्यतियुतं वद कोकिलकमिति सूत्रं ॥ 160 ॥

अर्थ––मणिजटित कुट्टिम भूमि से देदीप्यमान एवं जहां के गुच्छ-गुच्छ पुष्प और मंजरियों के ऊपर झुण्ड के झुण्ड मत्त मधुकर गुंजार कर रहे हैं, ऐसी माधवी लता के सदन में सखियों के समूह से घिरे हुए, नये-नये कमल के सुकोमल दलों से रची हुई शय्या पर, लाड़िली प्रिया के सहित विराजमान नन्द के लाल का ध्यान, कोई भाग्यशाली ही कर पाता है ॥ 160 ॥

मूल–– राधाकान्ते निविडभजनं तद्भक्तवृन्दे नति–
स्तल्लीलायां श्रवणसुरुचिर्बुद्धिश्च तादृग्गुरौ।
यस्याविघ्नं कलय घिषणे तत्पादलग्नं रजः
स्वाज्ञानस्य प्रबलधुतये नान्यत्किमप्याश्रयेः ॥ 161 ॥

तत्र साधनं सूचयन्नाह। हे घिषणे बुद्धे स्वाज्ञानस्य आत्मभ्रमस्य प्रबलधुतये। अत्यन्तनाशाय तत्पादलग्नं तस्य पुरुषस्य पादावलंबितरजः। अविघ्नं यथास्यात्तथा कलय जानीहि। अन्यत्साधनं किमपि नाश्रयेर्नावलंवथाः। कस्य यस्य राधावल्लभे निविडभजनं निश्छिद्रभक्तिः। तत्र लक्षणानि तद्भक्तवृन्दे नति र्नम्रता। तल्लीलायां श्रवणसुरुचिः श्रवणेऽत्यंताभिलाषः। गुरौ च तादृगेव बुद्धिः श्रीकृष्णमतिः। जात्यंतरं हारिणी छन्दः वेदर्त्वश्वैर्मभनमयलागश्चेत्तदा हारिणीति सूत्रं ॥ 161 ॥

अर्थ––किस प्रकार के साधन से यह सम्भव है? इसका समाधान करते हैं–– जिसकी श्रीराधावल्लभलाल में निश्छल रति भक्ति हो, श्रीजी के भक्तों के प्रति विनम्र रहता हो और जो गुरुदेव एवं इष्टदेव में भेद रखकर न चलता हो, ओ मेरी मति! तू अन्य समस्त साधनों को छोड़कर अपने भ्रमों का विनाश करने के हेतु ऐसे रसिक संतों की पदरज का आश्रय ग्रहण कर ॥ 161 ॥

मूल— चित्रं ज्योतिः सुमधुरमुखं स्फुरच्छिखिपिच्छकं,
राधासक्तं नवघननिभं वने परितो व्रजत् ।
वंशीनादामृतरसचितं सदा मम मानसे,
लोकातीतं स्फुरतु सुलभं गुरोरनुकम्पया ।। 162 ।।

बुद्धेरज्ञाननाशस्य फलितं सूचयन्नाह । मम मानसे ज्योतिः सदा स्फुरतु । कीदृशं । चित्रं आश्चर्यरूपं तत्र हेतुभूतवैलक्षण्यद्योतकविशेषणानि । पुनः कीदृशं । सुमधुरमुखं । तज्ज्योतिस्तु निराकारं । पुनः कीदृशं । वने वृन्दावने परितः सर्वतो ब्रजत् गच्छत्, तत्तु निष्क्रियं । पुनः कीदृशं । वंशीनादामृतरसचितं । वेणुशब्दामृतरसेन व्याप्तं । तत्तु निर्धर्मकं । र्तांह प्राकृतमित्यत आह लोकातीतं । अप्राकृतमित्यर्थः । पुनः कीदृशं । गुरोरनुकंपया कृपया सुलभं सुप्राप्यं । तत्तु ज्ञानाभ्यासक्लेशेन । जात्यंतरं । भाराक्रांता छन्दः । भाराक्रांता मभनरसला गुरुः श्रुतिहयैरिति सूत्रं ।। 162 ।।

अर्थ—गुरु-कृपा से बुद्धि शुद्ध होने का फल होता है कि—मेरे मन में वह विचित्र ज्योति स्फुरित होवे । इस प्रकार की एक (अतृप्त) लालसा जीवन के लिए उत्पन्न हो जाती है । इसकी विचित्रता को श्लेष से निर्गुण-सगुण रूप में स्पष्ट करते हैं कि ज्योति से हमारा अभिप्राय निराकार, अद्वय, निर्गुण, निष्क्रिय, निर्धर्मक, अप्राकृत और ज्ञान द्वारा अभ्यास करने पर भी अत्यंत क्लिष्ट ब्रह्मतत्व से नहीं है, अपितु चकित बना देने वाले उस मधुर मुखारविन्द से है, जिस पर मोरपंख शोभायमान हैं, श्रीराधानुरागी, नव-घन-सदृश श्यामल हैं, वृन्दावन में सर्वत्र विचरणशील हैं, वेणुनादरूपी अमृत-रस से भरा हुआ है, लोकोत्तर सौन्दर्य-धाम है, और गुरु-कृपा से अत्यंत सुलभ है ।। 162 ।।

मूल—कालिन्द्यास्तीरं सुखमधिगतां स्नातुमग्रे प्रविष्टो
निम्नेति भ्रान्तेरनभिविशतीं प्रेरितामन्तरम्भः ।
आलीभिः पश्चाद्विहसितमुखं कातराक्षीं मृगाक्षी-
मालिगन् गाढभजननिरतान् कृष्णदेवो धिनोतु ।। 163 ।।

अथ जलकेलिं स्मरंस्तद्रसिकानामाशिषं विधत्ते । कृष्णदेवो भजननिरतान् भजनरसिकान् धिनोतु प्रीणातु । किं कुर्वन् । मृगाक्षीं गाढं यथा तथालिंगन् । कीदृशीं । आलीभिः पश्चात् पृष्ठदेशात् विहसितं मुखं यथास्यात्तथा अंतरंभः जलमध्ये प्रेरितां निक्षिप्तां । कीदृशः कृष्णदेवः । स्नातुमग्रे पूर्वे प्रविष्टः अंतर्गतः । कीदृशीं । तां

**कालिन्द्यास्तीरं तटं सुखं यथास्यात्तथाधिगतां प्राप्तां कौतुकात् । पुनः कीदृशीं । निम्नेति भ्रांतेः । निम्ना गंभीरा इति भ्रमात् । अनभिविशंतीं प्रवेशमकुर्वाणां । पुनः कीदृशीं कातराक्षीं । कातरे जलप्रेरणात् विह्वले अक्षिणी यस्यास्तां । एवं विलासचमत्कारै रसिकान् सुखयत्वित्यर्थः । अष्टादशाक्षरं वृत्तं । कुसुमितलता वेल्लिताछंदः । स्याद्भू तर्त्वश्वैः कुसुमितलतावेल्लिता भ्रौ नयौ य इति सूत्रं ॥163॥**

अर्थ—जल केलि का वर्णन करते हुए ग्रंथकार लीलाप्रेमी रसिकजनों को आशीर्वाद देते हैं—सुखपूर्वक विचरण करते हुए युगल और उनकी सखी-मंडली यमुना-तट पर आकर कौतुहलवश स्नान करने को उद्यत हुई। सर्वप्रथम नन्दनन्दन जल में प्रविष्ट हुए। तदुपरान्त श्रीलाड़िली जी तीर पर विराज गईं और जल गहरा है इस विचार से जल में प्रवेश करने से आगा-पीछा करने लगीं। इतने में हँसती हुई सहचरियों ने समीप आकर जल में प्रेरित किया और प्राणेश्वर ने सामने से झेलकर उनको अपने प्रगाढ़ आलिंगन में आबद्ध कर लिया। इस प्रकार भीता, चकिता और कातराक्षी मृगलोचनी प्रिया से संश्लिष्ट श्रीकृष्ण भजनानंदी रसिक-जनों को प्रसन्न करें ॥163॥

मूल—**ग्रहणपराः सलीलमबलाः समीपतः सिंचितुं,**
**नयननिकोचनेन निहिताः सहासराधाख्यया।**
**अधिनदि नाभिदघ्नसलिलेऽपि भीषया नागरो**
**लघयितविग्रहो वत वपेति सत्वरं पातुः व ॥ 164 ॥**

**किं च। नागरः श्रीकृष्णो वः युष्मान् पातु रक्षतु। किं कुर्वन्। अधिनदि अधिनद्यां नाभिदघ्ने सलिलेऽपि नाभिप्रमाणजलेऽपि। अबला युवतीर्भीषयंस्त्रासयन्। तत्र हेतुत्वेन विशेषणं। कीदृशः। वत अहो वपा गर्त्त इति सत्वरं शीघ्रं लघयितविग्रहः। लघुकृतशरीरः। गर्त्तभयात्तासां प्रवेशाभावात्। कीदृशीस्ताः। सलीलं सविलासं समीपतो निकटात् सिंचितुं पाथोभिराक्षेप्तुं ग्रहणपराः ग्रहीतुकामाः। पुनः कीदृशीः। सहासराधाख्यया हास्ययुक्तया राधानाम्न्या नयननिकोचनेन नेत्रसंज्ञया निहिताः प्रेरिताः। जात्यंतरं नंदनछंदः। नजभरैस्तरेफसहितैः शिवैर्हयैर्नंदनमिति सूत्रं। ॥ 164 ॥**

अर्थ—केलि के मध्य में श्रीराधा ने नेत्र-भङ्गि के द्वारा समस्त सखियों को—मोहन लाल को—चारों ओर से घेरकर जल-सिंचन के लिए संकेत किया।

जब यह लीला प्रारम्भ हुई तो अपने को बचाते हुए भागते हुए कुछ ही दूरी पर

नाभिपर्यन्त जल होने पर भी अपने अंगों को संकुचित करके उसी में डूबते हुए "गढ़ा होने से यहाँ गहरा पानी है, आना नहीं" इस प्रकार सखियों को डराते हुए नागर तुम्हारी रक्षा करें।। 164।।

मूल—— निविडजघनघट्टनांदोलितोल्लोलमालामुहु-
र्दितसरसिरुहा सलीलं मृगाक्षीभिरादित्यजा।
लसदधरदलैस्तदीयैर्मुखैर्बिम्बिता तन्मुदे
पुनरितरपयोजखण्डं वमंतीव, प्रीणातु वः।।165।।

किं च। आदित्यजा यमुना वो युष्मान् प्रीणातु सुखयतु। कीदृशी। मृगाक्षीभिः सलीलं सविलासं दितसरसिरुहा त्रोटितकमला। पुनः कीदृशी। मुहुर्वारंवारं। निविड-जघनघट्टनांदोलितोल्लोलमाला। निविडानां पीनानां जघनानां घट्टनं संपर्कस्ते-नांदोलिताः कंपिता ये उल्लोला बृहत्तरंगास्तेषां माला परंपरा यस्यां सा। तदीयैर्मु-खैस्तासां वदनैर्बिंबिता प्रतिबिंबिता। कीदृशैर्मुखैः। लसदधरदलैः। लसंति अधर-दलानि येषु तैः। तत्रोत्प्रेक्षते। कीदृशीव। तन्मुदे तासां मोदाय। पुनः इतरपयोज-खण्डं। अन्यकमलकदंबं वमंतीव गर्भादुद्गिरंतीव। वमंतीव प्रीणात्वित्यत्र प्रपरतो लघुत्वं पूर्ववत्। जात्यंतरं नाराचछंदः। इह नरचतुष्कसृष्टं तु नाराचमा चक्षत इति सूत्रं।। 165।।

अर्थ——मृगनैनी सखियाँ यमुनाजी में खिले हुए कमलों को तोड़ती हुई जलक्रीडा कर रही हैं। उनकी सुपुष्ट जघन-स्थलियों की प्रताड़ना से आन्दोलित जल में लहरों पर लहरें उत्पन्न हो रही हैं। इन प्रकंपित लहरियों में सखियों के अधर-दलों से सुशोभित मुखारविंदों के प्रतिबिम्ब झलमला रहे हैं। लगता है मानो सहचरियों को मोद प्रदान करती हुई यमुना अनेकानेक कमलपुंजों को उगल रही हैं, ऐसी भानुजा तुमको सुखी बनावें।। 165।।

मूल—— दीव्यन्तावर्य्यमदुहितृजले स्वानुवर्तिप्रियाली
द्वावन्योन्यं भृतरसनयनैरन्तरं चार्द्रयन्तौ।
व्यात्युक्षीं तौ परिणतरतिनती राधिकाकृष्णचन्द्रौ
लोलद्बाहू द्रुतकनकमहानीलदेहौ हृदि स्ताम् ।।166।।

स्वयं ध्यायति। राधिकाकृष्णचन्द्रौ हृदि चित्ते स्तां वर्त्ततां। कीदृशौ। द्रुतकनक-

महानीलदेहौ। द्रुतं दाहोत्तीर्णं यत्कनकं महानीलो मरकतमणिश्च तद्वद्देहं ययोस्तौ। पुनः कीदृशौ। अर्यमदुहितृजले। यमुनापयसि अन्योन्यं परस्परं। व्यात्युक्षीं सेचन-क्रीडां। दीव्यंतौ खेलंतौ। पुनः कीदृशौ। लोलंतौ जलसेचनेन चंचलौ बाहू ययोस्तौ। पुनः कीदृशौ। स्वानुवर्तिप्रियालीस्वमात्मानमनुवर्त्तिन्योऽनुसारिण्यः। प्रिया आलयः सख्यो ययोस्तौ। पुनः कीदृशौ। पणितरतिनती रतिः सुखं च नतिः प्रण-तिश्च रति नती पणिते ग्लहीकृते रतिनती याभ्यां। पराजये देयांशः पणः। राधिका-पक्षे रति: कृष्णपक्षे नतिरिति विवेकः पुनः कीदृशौ। भृतरसनयनैः भृतः धृतः रसः स्नेहो येषु तैर्नयनैरंतरमंतःकरणं च आर्द्रयन्तौ स्नेहयंतौ। न केवलं भृतरसकरैः शरीरमेव अपितु भृतरसनयनैर्मनोऽपीति चकारार्थः। जात्यंतरं चित्रलेखा छंदः। मंदाक्रांता नयुगलजठरा कीर्तिता चित्रलेखेति सूत्रं॥ 166॥

अर्थ—तप्त कंचन और मरकतमणि (नीलम) के सदृश देह वाले, यमुना में एक-दूसरे पर जल-सिंचन-क्रीडा करते हुए, जल फेंकने से चंचल भुजाओं वाले, प्रिय सखियाँ जिनका अनुकरण कर रही हैं तथा रति और नति की जिन्होंने बाजी लगा रखी है, अन्तः करण में भरे स्नेह से जिनके नेत्र भीग रहे हैं, ऐसे श्री राधिका और श्रीकृष्णचन्द्र मेरे हृदय में निवास करें॥ 166॥

मूल—स्नान्तीनामधिभानुजं मृगदृशां गात्रेषु रुचिरा
या लक्ष्मीः, सलिलार्द्रवस्त्रजनिता पीनस्तनयुजाम्।
लक्ष्मीचित्तहृतोऽपि वल्लवपतेश्चेतः सरभसं
जह्रे, सन्ततमातनोतु रसिकाः सा वः सुख-चयम्॥167॥

पुनराशिषं प्रयुंक्ते। हे रसिकाः सा लक्ष्मीः शोभा वो युष्माकं सुखचयं तनोतु विस्तारयतु। सा का वल्लवपतेः श्रीकृष्णस्य चेतः सरभसं सकौतुकं यथा तथा जह्रे हृतवती। कीदृशस्यापि लक्ष्मीचित्तहृतः। लक्ष्म्याश्चित्तं हरतीति लक्ष्मीचित्त-हृत्तस्यापि अपि शब्दस्तुशब्दव्याप्तसाम्ये वैलक्षण्यद्योतकः। कीदृशी लक्ष्मीः। मृगदृशां मृगाक्षीणां गात्रेषु। सलिलार्द्रवस्त्रजनिता क्लिन्नवसनैः प्रकटिता। पुनः कीदृशी। रुचिरा रम्या। कीदृशीनां मृगदृशां अभिभानुजं भानुजायां स्नांतीनां पुनः कीदृशीनां पीनस्तनयुजां पीनकुचयुक्तानां। जात्यंतरं शार्दूलललिता छंदः। मः सो जः सतसा दशर्तुभिः शार्दूलललितमिति सूत्रं॥ 167॥

अर्थ—हे रसिकजनो! लक्ष्मी के मन को चुराने वाले श्रीहरि के मन को भी हरण करने वाली, यमुना में स्नान करती हुई, पुष्ट उरोजों से रुचिर मृगनयनी

रमणियों के अंगों में भीजकर लिपटे नीले वस्त्रों से उत्पन्न हुई शोभा तुम्हारे सुखों का विस्तार करें ।। 167 ।।

मूल--च्युतैरङ्गाद्रागैररुणितपयाः केसरैश्चित्रितोर्मिः,
श्रुतेर्भ्रष्टैर्वेणिस्खलितकुसुमैराकुलोपांतरम्या ।
विधोर्वृन्दाटव्याः कलितयुवतेः क्रीडतः प्राप्तसंप-
द्दिनाधीशस्येयं क्षिपतु भवतां पापराशिं तनूजा ।। 168 ।।

किं च । दिनाधीशस्य सूर्य्यस्य तनूजा पुत्री भवतां पापराशिं क्षिपतु नाशयतु । कीदृशी वृन्दाटव्याः श्रीवृन्दावनस्य विधोश्चंद्रात् प्राप्तसम्पत् प्राप्ता संपत् शोभा-विशेषो यया सा । कीदृशात् । क्रीडतो विहरतः । पुनः कीदृशात् । कलितयुवतेः कलिताः स्वीकृताः युवतयो येन तस्मात् । संपत्प्राप्तिसूचकविशेषणानि । कीदृशी सा । अंगात् शरीरात् । च्युतैः स्नाने वियुक्तैः रागैः कौंकुमैररुणितपयाः अरुणीकृतजला । पुनः कीदृशी । श्रुतेः कर्णात् भ्रष्टैः स्खलितैः किंजल्कैश्चित्रितोर्म्मिः कर्वुरीकृततरंगा । पुनः कीदृशी । वेणिस्खलितकुसुमैः । केशपाशाद् विमुक्तैः पुष्पैः आकुलोपांतरम्या आकुलो व्याप्तो य उपांतः प्रांतभागस्तेन रम्या रमणीया । जलेनोक्षितत्वात् । ऊनविंशाक्षरवृत्तं मेघविस्फूर्जिता छंदः । रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्ज्जितं स्यादिति सूत्रम् ।। 168 ।।

अर्थ--स्नान के समय शरीर से छूटे हुए कुंकुमादि अंगरागों से जल को लाल बनाने वाली, कानों से छूटी हुई केसर से चित्रित, वेणी से गिरे हुए जो फूल लहरियों पर झूलते हुए किनारे पर जा लगे थे, उनसे शोभायमान सूर्यतनया यमुना युवति-जनों के साथ जलकेलि करते हुए श्रीवृन्दावनचन्द्र से प्राप्त संपत्ति के द्वारा आपकी पापराशि को नष्ट करें ।। 168 ।।

मूल--मुखाम्भोजं केशैरसितकुटिलैश्च्योतत्पयोबिंदुभिः,
स्खलन्माध्वीकास्यभ्रमरसदृशैर्विभ्राजितं हृत्पतेः ।
तनुश्चातिश्यामा धृतजलकणा कृष्णामधिक्रीडतो,
लसन्मुक्ताक्षोदा मरकतशिलेवालं हृदि व्याप्नुताम् ।।169।।

स्वयं मनोरथं कुरुते । कृष्णां यमुनां अधि-अधिकृत्य क्रीडतो विहरतः हृत्पतेः । हृदयेश्वरस्य श्रीकृष्णस्य मुखांभोजं मुखकमलं तनुश्च कलेवरं च मम हृदि अलं

अत्यर्थं व्याप्नुतां प्रविशतां कीदृशं मुखांभोजं केशैर्विभ्राजितं अतिशोभितं। कीदृशैः। असितकुटिलैः। असिताः श्यामाश्च ते कुटिलाश्च तैः। पुनः कीदृशैः। श्च्योतत् पयोबिंदुभिः श्च्योतंति क्षरंति पयोबिन्दवो येभ्यस्तैः। उत्प्रेक्षते। पुनः कीदृशैः। स्खलन्माध्वीकास्यभ्रमर सदृशैः। स्खलितं पतितं माध्वीकंखामकरंद आस्यान्मुखाद्येषां ते च ते भ्रमरास्तत्सदृशैः। तनुः कीदृशी अतिश्यामा। पुनः कीदृशी। धृतजलकणा आश्रितशीकरा। तत्रोत्प्रेक्षते। कीदृशीव मरकतशिलेव। कीदृशी मरकतशिला। लसन्मुक्ताक्षोदा। लसति विराजते मुक्तानां क्षोदश्चूर्णं यस्यां सा। जात्यंतरं लोला छंदः। भवेत्सैवच्छाया तयुगलयुता द्वादशांतेयदिति सूत्रं॥ 169॥

अर्थ--यमुना में स्नान करते हुए श्यामसुन्दर का मुखकमल काली घुंघराली अलकावली से सुशोभित हो रहा है। टपकती हुई जल की बूंदें ऐसी लगती हैं, मानो छककर पीने के बाद भ्रमरावली मकरन्द (पुष्प-रस) उगल रही हो। इसी प्रकार भीगे हुए श्याम शरीर की सुषमा भी जल-कणों से अपूर्व लग रही है मानो नीलमणि की शिला पर मोतियों को चूर-चूर करके बिखरा दिया हो॥ 169॥

मूल--अन्योन्यं करसंपुटान्तनिहितैर्गण्डूषसंयोजितैः,
पीनोरोजविघट्टितैः सरभसं बाहुद्वयालोडितैः।
श्रोणीबिंबपराहतैश्च सलिलैराक्रीडमातन्वती,
कुर्यान्मोदमपावृतं मम सदा गोष्ठांगनामंडली॥ 170॥

मनोरथांतरं। गोष्ठांगनामंडली व्रजांगनामंडली मम सदा। अपावृतं अविच्छिन्नं मोदं हर्षं कुर्यात्। कीदृशी। सलिलैर्जलैराक्रीडं क्रीडोपकरणं। आतन्वती कुर्वती। कीदृशैः। अन्योन्यं परस्परं करसंपुटांतनिहितैः। करयोर्दक्षिणेन वामांगुष्ठमूलमापीड्य तेन तस्य वा तीर्यगंगुलिभिर्मिथः संयोगरूपो यः संपुटस्तस्यांतेन मध्येन निहितैः प्रेरितैर्यस्याः प्रेरितं सलिलं लक्षीकृतं न स्पृशेत्सा पराजिता भवेदित्येकाक्रीडा। पुनः कीदृशैः गंडूषसंयोजितैः आपूर्य मुखेन निक्षेपणं गंडूषस्तेन संयोजितैः। निक्षिप्तैर्यस्या गंडूषनिक्षेपोऽर्वाकूपतेत् सापीत्येका। पुनः कीदृशैः। पीनोरोजविघट्टितैस्ताडितैर्यस्याः प्रताडनेन संख्ययाल्पतरंगाः प्रादुर्भवेयुः सापीत्येका। पुनः कीदृशैः। सरभसं सवेगं बाहुद्वयालोडितैरितरेतरमंजलिभिर्गृहीतमणिबंधेन बाहुद्वयेन आलोडितैरुन्मथितैः। यदुन्मथनोत्थः फेनो चिरंविलीयते सापीत्येका। पुनः कीदृशैः श्रोणीबिंबपराहतैः श्रोणीबिंबेन नितंबमंडलेनं पराहतैः पश्चात्प्रेरितैः। पृष्ठतो गमने पंक्तितस्त्रुटिता भवेत्सापीत्येका। एवं जलक्रीडाभेदैर्विहरंतीत्यर्थः।

जात्यंतरं शार्दूलविक्रीडितं छंदः। सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति सूत्रम् ॥ 170 ॥

अर्थ——हस्तकमलों के संपुटों से परस्पर सिंचन करती हुई, मुख में जल भरकर पिचकारी की भाँति छोड़ती हुई, परिपुष्ट उरोजों से ढकेलकर तरंग उपजाती हुई, दोनों बाहुओं से आलोडन करती हुई और कटितट से लहरों को पीछे की ओर प्रेरित करती हुई, अनेक प्रकार से जल-विहार में प्रवृत्त व्रजांगनाओं की मण्डली निरन्तर मुझे आनंदित करती रहे ॥ 170 ॥

मूल——बह्वीभिर्वल्लवीभिः सरणविसरणैः खेलनपरो
दीर्घश्रान्तोऽधिपाथः प्रणयरसनिधिर्नन्दतनयः।
आजानुन्यस्तबाहुः स्फुरदधरदलः श्वासपवनैः
स्कन्धासक्तोरुकेशस्तिरयतु जगतां खेदमखिलम् ॥ 171 ॥

पुनराशीः। नंदतनयो जगतां अखिलं समस्तं खेदं श्रमं तिरयतु विनाशयतु। कीदृशः। अधिपाथः पाथसि जले दीर्घमधिकं यथा तथा श्रांतः श्रमं प्राप्तः। कुतः। यतो बह्वीभिर्बहुभिर्वल्लवीभिर्व्रजांगनाभिस्सरणविसरणैः। सरणानि संमुखगमनानि विसराणि परावृत्य गमनानि तैः कृत्वा खेलनपरः क्रीडापरः। तदपि कुतः। यतः प्रणयरसनिधिः प्रीतिरसाश्रयः श्रांतत्वद्योतकविशेषणानि। कीदृशः। आजानुन्यस्तबाहुः। जानुपर्यंतं सरलायितहस्तः शिथिलत्वात्। पुनः कीदृशः। श्वासपवनैर्निश्वासवायुभिः स्फुरदधरदलः। चलदधरकिशलयः। पुनः कीदृशः। स्कंधासक्तोरुकेशः। स्कंधयोरासक्ता लग्ना आर्द्रत्वादुरुकेशाः सघनचिकुरा यस्य सः। जात्यंतरं सुरसा छंदः। म्रौ भ्नौ यो नो गुरुश्चेत्स्वरमुनिकरणैराह सुरसामिति सूत्रम् ॥ 171 ॥

अर्थ——अनेक व्रजांगनाओं के साथ गतिपरिवर्तन करते हुए, जल-केलि-रत, प्रीति-रस के आश्रय, परिश्रान्त होने के कारण जानुपर्यन्त शिथिल हस्त-कमलों से सुशोभित, जल्दी-जल्दी साँस लेने के फलस्वरूप फड़क रहे हैं अधर-पल्लव जिनके एवं भीजकर कन्धों पर बिखरी हुई घनी अलकावली से युक्त नन्दनन्दन जगत् के सम्पूर्ण खेद को विनष्ट करें ॥ 171 ॥

मूल——अध्यम्भः स्वच्छे प्रविततनलिनीपत्रमालापरीते-
ऽभिप्राणेशानं स्फुटकुचपिहितेर्लज्जया कुंचितायाः।
वक्त्रं लोलाक्ष्याः स्फुरदलिवलितं पद्मखण्डं तदानीं,
विब्बोकैर्हीनं हतरुचि विदधन्मे सदा हृद्यमस्तु ॥ 172 ॥

स्वयमिति ध्यायति । लोलाक्ष्याः श्रीराधाया वक्त्रं मुखं तदानीं तस्मिन्नवसरे सदा मे हृद्यं अस्तु हृदयंगमं भवतु । कीदृशं । पद्मखण्डं कमलवृन्दं हतरुचि विदधत् । गतच्छवि कुर्वत् । कीदृशं पद्मखंडं । स्फुरदलिवलितं । स्फुरद्भ्यामलिभ्यां वलितं युक्तं । अत्र तारकासाम्यवैलक्षण्यद्योतकं विशेषणं । पुनः कीदृशं । विव्वोकैर्विलासैर्हीनं रहितं । कीदृश्या लोलाक्ष्याः । अभिप्राणेशानं प्राणनाथं अभिलक्षीकृत्य लज्जया अघ्यंभः । आकुंचिताया वामनीभूय स्थितायाः । कस्य हेतोः स्फुटकुचपिहितेः स्फुटौ आर्द्रकंचुके व्यक्तच्छवी यौ कुचौ तयोः पिहितिराच्छादनं तस्या हेतोः । कीदृशे स्वच्छे निर्मले । तर्हि कथं कुचपिहितिस्तत्राह । प्रविततनलिनीपत्रमालापरीते । प्रवितता विस्तीर्णा या नलिनीपत्रमाला पद्मिनीपत्रपंक्तिस्तया परीते वेष्टिते । जात्यंतरं फुल्लदाम छन्दः । म्तौ न्सौ रौ चेद्गो शरहयतुरगैः फुल्लदाम प्रसिद्धं । मगणतगणनगणसगणरगणद्वयगुरुभिः सिद्ध्यति ॥ 172 ॥

अर्थ—श्रीजी का नीलाम्बर जल में भीगने के कारण श्रीअंग से एकाकार हो गया है। श्यामसुन्दर की दृष्टि से अपने वक्षस्थल को दुराते हुए उनका मुख जिस अपूर्व शोभा से मंडित हो उठा है उसी का वर्णन और ध्यान करते हुए ग्रंथकार कहते हैं:—

वस्त्रों के भीग जाने से यमुना के स्वच्छ जल में प्रतिबिम्बित अपने वक्षस्थल को लाल की लचौंही नजर से विस्तीर्ण कमलदलों की माला के द्वारा छिपाते हुए, लज्जा से सिकुड़ती हुई, चंचलनेत्रा श्यामा (लाड़िली) का सहमा हुआ वह मुखचन्द्र जो अरबराती हुई भ्रमरावली से युक्त कमलों को तिरस्कृत कर रहा है, मेरे मन में उदित होवे ॥ 172 ॥

मूल—सिन्धोर्मध्यात्सलीलं चिरमवमथितादुन्नीतकमला
निर्यान्ती क्लिन्नवस्त्रा विहसितवदना श्रीकृष्णहृदयम् ।
कर्षन्ती गाढचित्तेभवशतधृतिमाकर्णप्रपतितैरालोकै-
स्तुच्छयन्ती वसतु हृदि मे श्रीराधान्यकमला ॥ 173 ॥

निर्गमनं ध्यायति । श्रीराधा मे हृदि वसतु । कीदृशी सिंधोर्नद्या मध्यात् निर्यांती । कीदृशात् । चिरं बहुकालं अवमथितात् । आलोडितात् । पुनः कीदृशी । अन्य कमला । अन्या पूर्वविलक्षणा जलसंपादिता कमला श्रीर्यस्याः सा श्लेषार्थे । अन्या चासौ कमला लक्ष्मीरिति वा समासः । पुनः कीदृशी । क्लिन्नवस्त्रा आर्द्रवसना । पुनः कीदृशी । आकर्णप्रपतितैः । कर्णपर्यंतप्रसृतैरालोकैर्विलोकनैर्गाढचित्तेभवशतधृतिं । गाढां दृढां चित्ते भवस्य कामस्य शतसंख्यायुक्तां धृतिं धैर्यं तुच्छयंती अनादियाणा ।

पक्षे तु गाढ चित्ते भगवत्परत्वाद्दृढमनसि भव युक्तो यः शतधृतिर्ब्रह्मा तं। नन्वन्या कमलेति कथमुच्यते। तत्राह श्रीकृष्णेति। श्रीकृष्णहृदयं कर्षंती स्वप्रवणं कुर्वंती। सा तु कृष्णाकृष्टहृदयेति वैलक्षण्यं। पुनः कीदृशी। विहसितवदना। श्रीकृष्णावलोकनात् स्मितमुखी। विंशत्यक्षरं सुवदना छंदः। ज्ञेया सप्तश्वषड्भिर्मरभनययुता म्लौ गः सुवदनेति सूत्रम्॥ 173॥

अर्थ––कालिन्दी में स्नान करके निकली हुई प्रियाजी का वर्णन करते हैं:–– श्यामसुन्दर के देखे जाने पर मुस्कराकर उनके मन को आकर्षित करती हुई, कानों तक फैले विशाल नेत्रों की चितवन से सौ-सौ कामदेवों के धीरज का अनादर करती हुई, भीगे वस्त्रों से युक्त, जल-स्नान से शोभा बढ़ गई है जिनकी, बहुत देर तक जल का आलोड़न करने के उपरान्त लीला-सहित यमुना से (बाहर) निकलती हुई श्रीराधा मेरे मन में निवसित हों॥ 173॥

मूल––मृदुचीनशाटिकया समीरणकंपितांचलया मुहुः
प्रतिकान्तमीरितसस्मितत्रपिताक्षिवंधुरमुन्नतम्।
स्तनमंडलं कलकंकणध्वनि वृण्वती यमुनातटे
वृषभानुजा खलु कस्यचित् कृतिनोऽमले हृदि संगता॥174॥

ध्यानविशेषपरं रसिकं बहु मनुते। वृषभानुजा श्रीराधा कस्यचिद्विरलस्य कृतिनः पुण्यवतः। अमले निर्मले हृदि खलु निश्चितं संगता प्राप्ता। कीदृशी। यमुनातटे कलः कंकणानां ध्वनिर्यत्र तत्तथा स्तनमंडलं उन्नतं उच्चं विवृण्वती आच्छादयंती। कया मृदुचीनशाटिकया मृदुः कोमला चीना सूक्ष्मा शाटिका उत्तरीया तया। प्रथमं कंचुक्यपरिधानात्। कीदृश्या। समीरणकंपितांचलया वायुकंपितप्रांतया कथं वृण्वती कांतं श्रीकृष्णं प्रति मुहुर्वारं वारं ईरितं प्रेरितं सस्मितं मंदहासयुक्तं त्रपितं लज्जितं यदक्षि लोचनं तेन वंधुरं सुन्दरं यथा तथा। जात्यंतरं गीतिका छंदः। सजसा भरौ सलगा यदा कथिता तदा खलु गीतिकेति सूत्रम्॥ 174॥

अर्थ––कंकणों की ध्वनि सहित श्रीराधा कोमल और महीन साड़ी धारण कर रही है, यमुना-तीर पर चलने वाली मंद-मंद हवा के कारण उनका अंचल बार-बार उड़-उड़ जाता है और उनके उन्नत वक्षस्थल पर श्यामसुन्दर की दृष्टि पड़ती है, इससे उनकी ओर मुस्कराकर सलज्ज चितवन से निहारती हुई वृषभानुजा की यह छवि किसी भाग्यशाली के हृदय में स्थान पाती है॥ 174॥

मूल--कोमलांगुलीदलान्तसच्चरन्नखांशुराजिकेसराणि
लोलनूपुरालिमंजुनादसंपदा मनोहराणि।
सकते यमस्वसुः सलीलवलितानि तानि मे, कथं नु
घोषसुंदरीपदांबुजानि तानि मानसे समुल्लसंतु ॥ 175 ॥

स्वयं ध्यानविशेषाय मनोरथं कुरुते। तानि घोषसुंदरीपदांबुजानि व्रजांगना-चरणकमलानि मे मानसे कथं केन प्रकारेण नु इति वितर्के समुल्लसंतु सम्यग्वि-राजंतां। कीदृशानि। यमस्वसुर्यमुनायाः सैकते पुलिने सलीलं सविलासं वेलितं चलनं येषां तानि। पुनः कीदृशानि। कोमलानि यान्यंगुलीदलानि तेषामंते मध्ये संचरंत्यो व्याप्नुवंत्यो या नखांशुराजयो नखकिरणलेखास्ता एव केसराः किंजल्का येषु तानि। पुनः कीदृशानि। लोलानि चंचलानि यानि नूपुराणि मंजीराणि तेषाम-लीनां भ्रमराणामिव या मंजुनादसंपत् मनोरमध्वनिसंपत्तिस्तया मनोहराणि हृदयंगमानि। जात्यंतरं चित्रवृत्तं छंदः। चित्रमीदृशं तु नामतोरजौ रजौ रजौगुरुलघु चेति सूत्रम् ॥ 175 ॥

अर्थ--यमुना के पट पर, विलासपूर्वक (लटक कर चलती हुई ब्रजांगनाओं के चरण-कमल जिनमें कोमल अँगुलियाँ ही दल हैं, नखावली ही केसर है, बजते हुए चंचल बिछुओं की झनकार ही मधुपों का मनोहारी गुंजन है, मेरे मानस (सर) में भली भाँति खिल उठें॥ 175 ॥

मूल--व्रजन् वृन्दाटव्यै सुललितपदविन्यासलीलातिरम्यः,
पुरस्तादुड्डीनां बहुविधपततां श्रेणिमुदीक्ष्यमाणः।
मुहुर्यातायातैरसुवहजघने वेल्लितालोलबाहु-
र्गणो लोलाक्षीणां किमु मयि कृपयेद्राधिकानाथ नाथः॥ 176॥

मनोरथांतरं। लोलाक्षीणां युवतीनां गणः समूहः। मयि किमु कृपयेत् कृपां कुर्यात्। कीदृशः। राधिकानाथनाथः। श्रीकृष्ण एव नाथो यस्य। किं कुर्वन्। वृन्दाटव्यै वृन्दा-वनाय व्रजन् गच्छन्। वृन्दाटव्या इति गत्यर्थकर्मणि चतुर्थी। पुनः कीदृशः। सुललित-पदविन्यासलीलातिरम्यः। सुललितः अतिरमणीयो यः पदविन्यासश्चरणारोपणं। तस्य लीला विलासस्तयातिरम्यः अतिरुचिरः। पुनः कीदृशः। बहुविधपतता बहु-प्रकारपक्षिणां श्रेणिं पंक्तिं। उदीक्षमाणः ऊर्द्धमवलोकयन्। कीदृशीं। पुरस्तादुड्डीनां। पुरस्तादग्रत उड्डीनं अंतरिक्षगतिर्यस्याः सा तां। प्रडीनोड्डीनसंडीना वयसां गतयः क्रमादिति वचनात्। पुनः कीदृशः। असुवहजघने पीनत्वाद्दुर्वहे जघने मुहुर्यातायातैः।

वारं वारं गतागतैः । कृत्वा वेल्लितालोलबाहुः कंपिततरलभुजः । शोभा छंदः । रसाश्वैः शोभा स्यान्ननयुगजठरा मेघविस्फूर्जिता चेदिति सूत्रम् ॥ 176 ॥

अर्थ––अत्यंत रमणीय चरण-विन्यास से शोभायमान, आकाश में उड़ते हुए नाना प्रकार के पक्षियों की पंक्तियों को विशाल नेत्रों से ऊपर की ओर देखते हुए और बार-बार इधर-उधर चलने से श्रमित हैं पीन जघन तथा भुजलताएँ जिनकी, ऐसी चंचल नेत्रवाली सखियों का वह समूह जिसके एकमात्र नाथ श्रीराधापति ही हैं, श्रीयमुना में स्नान करने के उपरांत श्रीवृन्दावन की ओर चला जा रहा है। यह सखीयूथ क्या मुझ पर कृपा करेगा ? ॥ 176 ॥

मूल––श्यामावृन्दाविशाखामलमतिललिताचन्द्रकांतानुविंदा-
पद्माद्याश्चारुशीलाः प्रमुदितहृदया नर्मभिर्निम्नबोधैः ।
श्रीदामानुप्रसूतां प्रणयरसमयीं हासयन्त्योऽनुयान्त्य-
श्चिन्त्या नो चेत्तदा धिक् तव हतकमनः सर्वचातुर्यदम्भम् ॥177॥

व्यतिरेके मनो निंदति। हे हतकमनः क्षुद्रहृदय तदा तव सर्वचातुर्यदंभंसमस्त-चातुरीकपटं धिगस्तु । कदा श्यामा च वृन्दा च विशाखा च । अमलमतिश्चासौ ललिता च चंद्रकांता च अनुविंदा च पद्मा च आद्या यासां ता यदि नो चिन्त्याः। न चिंतनीयाः किं कुर्वंत्यः श्रीदामानुप्रसूतां श्रीदामानाम वृषभानोः पुत्रस्तस्यानुप्रसूतां अवरजां श्रीराधां नर्मभिः परिहासैर्हासयंत्यः हास्यं प्रापयंत्यः । कीदृशैः । निम्नो-गंभीरो बोधो ज्ञानं येषां चिरवेद्यैरित्यर्थः । कीदृशीं प्रणयरसमयीं प्रेमरसरूपां ताः । कीदृश्यः । अनुयांत्यः अनुगच्छंत्यः । पुनः कीदृश्यः । चारुशीलाः । रमणीयसुच-रिताः । पुनः कीदृश्यः । प्रमुदितहृदया आनंदितचित्ताः । स्रग्धरा छन्दः । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयमिति सूत्रम् ॥ 177 ॥

अर्थ––सदैव प्रसन्न रहने वाली, रमणीय है चरित्र जिनका, गम्भीर ज्ञान से युक्त अनुगामिनी श्यामा, वृन्दा, विशाखा, विमलमति ललिता, चन्द्रकान्ता, अनुविंदा और पद्मा आदि सखियाँ, श्रीदामा की छोटी बहिन श्रीराधा लाड़िली को अपने परिहास-वचनों से हँसा रही हैं। हे मेरे मन ! यदि तू इनका ध्यान नहीं करता तो तेरी सारी चतुरता का अभिमान व्यर्थ है ॥ 177 ॥

मूल––विषमगिरा तथा निगदिता अपि सस्मितसुप्रियोदिता-
श्चपलकरैर्मुहुः प्रतिहता अपि पाणिपदांगुलीस्पृशः ।

विमुखतया रुषा विमुखिता अपि संमुखकलिपताननाः,
स्मृतिरुपयातु कृष्णरमणीमनुबोधयन्तीः सखीर्मम ॥ 178 ॥

मनोरथांतरं कुरुते। मम स्मृतिः स्मरणं कर्तृ ताःसखीः कर्मभूताः। उपयातु गच्छतु स्मराणीत्यर्थः । किं कुर्वाणाः । कृष्णरमणीं श्रीराधां अनुबोधयंतीः अनुनयंती : । कीदृशीः । तया विषमगिरा वक्रवाण्या निगदिता उक्ता अपि सस्मितसुप्रियोदिताः सस्मितं स्मितसहितं । शोभनं प्रियोदितं प्रियवाक्यं यासां ताः । पुनः कीदृशीः । चपलकरैर्निवारणाय चंचलपाणिभिर्मुहुः प्रतिहता निक्षिप्ता अपि पाणिपदांगुली-स्पृशः । करचरणांगुली : स्पृशंतीति ताः । पुनः कीदृशीः । रुषा कोपेन विमुखतया वैमुख्येन विमुखिता पृष्ठतः कृता अपि संमुखकल्पिताननाः । संमुखं कल्पितं स्थापित-माननं याभिस्ताः । सरसी छन्दः सिंधुरमिति केचित् । नजभजजजरौ यदि तदा गदिता सरसी कवीश्वरैरिति सूत्रम् ॥ 178 ॥

अर्थ—कृष्ण-कान्ता श्रीराधा यदि कुपित (मानवती) होकर कभी कठोर वाणी भी बोलती हैं तो सखियाँ मुस्कराकर उन्हें प्रियवाणी से प्रसन्न करती हैं, कभी अनखाकर उन्हें परे भी हटाती हैं तो वे श्रीचरणों का स्पर्श कर उन्हें मनाती हैं, यदि वे कभी पीठ फेरकर कोप प्रकट करती हैं तो सखियाँ प्रेम से उनके चिबुक को स्पर्श कर उन्हें अभिमुख होने को विवश कर देती हैं, इसप्रकार अनुनय करती हुई सखियाँ मेरी स्मृतिगोचर हों ॥ 178 ॥

मूल—गुम्फन्त्यो धम्मिल्लं मल्लीनवनवकुसुमततिभिरधिकुंज
लोलांगुल्यः केशस्तोमे लघुतरविवृतिवलनबहुदक्षम् ।
द्रष्टुं शोभां धृत्वा हस्ते मुहुरभिमुखितवदनजलजायाः
श्रीराधायाः सख्यश्चित्ते मम कथमविरतमहह विशन्ति ॥179॥

किं च । श्रीराधायाः सख्यः मम चित्ते अहहेति दैन्ये अविरतं निरंतरं कथं केन प्रकारेण विशंति । किं कुर्वंत्यः । अधिकुंजं मल्लीनवनवकुसुमततिभिः । मल्लिकायाः किंचित् किंचिद्विकसितकलिकाभिर्धम्मिल्लं तस्याः केशपाशं गुंफंत्यः ग्रंथयंत्यः । कीदृश्यः । केशस्तोमे चिकुरकलापे लघुतरविवृतिवलनबहुदक्षं लघुतरं अतिशीघ्रं यथा तथा विवृतिर्विवरणं वलनं संयोजनं तत्र दक्षं निपुणं यथा तथा लोलांगुल्यः चंचलांगुलयः । कीदृश्याः श्रीराधायाः । मुहुरभिमुखितवदनजलजायाः मुहुर्वारं वारं अभिमुखितं संमुखीकृतं वदनजलजं यस्याः सा तस्याः । किं कृत्वा । हस्ते धृत्वा

किं कर्तुम्। शोभां पुष्पग्रथनजनितां। द्रष्टुं अवलोकयितुं ग्रथनादनंतरमेव विलोकनं युज्यते। अत्र तु स्नेहाधिक्येन मध्य एव वारंवारमिति। द्वाविंशत्यक्षरं वृत्तं हंसी छंदः। मौ गौ नाश्चत्वारो गोगो वसुभुवनयतिरिति भवति हंसीति सूत्रम्॥ 179॥

अर्थ—अलिगण, चमेली की नव-नव कुसुम-कलियों से कुंज में विराजमान श्रीजी के केशपाश को गूंथ रही हैं, इनकी अतिशीघ्र चलने वाली उंगलियाँ वेणी गुहने में अत्यन्त दक्ष हैं, थोड़ी-थोड़ी देर बाद श्रीजी के मुख-कमल को ठोड़ी पकड़ कर अपनी ओर करते हुए पुष्पों के गूंथने से उत्पन्न हुई शोभा को निरखती जाती हैं। अहो! श्रीराधारानी की ये सखियाँ कब मेरे मन में निरंतर निवासित होंगी॥ 179॥

मूल—आलिजनैः परिकल्पितसुन्दरराजदनेकवराभरणा
मेचकचीन-पटीलसदुज्ज्वलदेहरुचिर्वदनेन्दुरुचा।
वल्लिचयैः परितः पिहिते पथि नैशतमः प्रविदारयति
यानपरा प्रति कान्तमलं हृदलंकुरुताद् वृषभानुसुता॥180॥

किं च। वृषभानुसुता श्रीराधा हृन्मनः अलं अत्यर्थं अलंकुरुतात् अलंकरोतु मनसि स्फुरत्वित्यर्थः। कीदृशी। कांतं श्रीकृष्णं प्रति यानपरा गमनशीला। पुनः कीदृशी। आलिजनैः सखीजनैः परिकल्पितानि यथा स्थानं धृतानि सुंदराणि घटितानि राजंति अनेकानि वराणि श्रेष्ठानि अमूल्यानीत्यर्थः। आभरणानि भूषणानि यस्याः सा। पुनः कीदृशी। मेचका नीला चीना सूक्ष्मा या पटी अन्तरीयं तया लसंती विराजमाना देह रुचिः शरीरकांतिर्यस्याः सा। पुनः कीदृशी। वदनेन्दुरुचा वदनचंद्रदीप्त्या पथि मार्गे। नैशतमः रात्रिजनितांधकारं प्रविदारयंती विनाशयंती। कीदृशे पथि। वल्लिचयैर्लतापुंजैः परितः सर्वतः पिहिते आच्छादिते। जात्यंतरं मदिरा छंदः। सप्तभकार युगेकगुरुर्गदितेयमुदारतरा मदिरा। भगणसप्तकेनैकगुरुणा सिद्ध्यति॥ 180॥

अर्थ—लता-समूह के द्वारा चारों ओर से आच्छादित निकुंज-मार्ग को रात्रि में, अपनी वदनचंद्र की चाँदनी से आलोकित करती हुई, महीन नील साड़ी में दीपित अंग-कांति से युक्त तथा सखियों के द्वारा यथास्थान अनेकानेक अमूल्य उत्तमोत्तम अलंकार धारण किए हुए श्रीकृष्ण-मिलन को जाती हुई श्रीवृषभानुसुता मेरे मानस में स्फुरित होवें॥180॥

मूल—अहह! कदा नु कुंजनिलये रतेशविहितप्रशस्तशयने
समुपगतापि साभिलषितत्रपातिसरसं प्रियस्य सविधे।

अनभियियासया प्रतिविवृत्य वक्त्रमनुतिष्ठता सहसितं
हितसवयोभिरंकविभृता पुनातु मम लोचनं वरतनुः।।181।।

अथ श्रीराधाया अवस्थाविशेषं द्रष्टुं । तद्योग्यतायै स्वनेत्रस्य शुद्धिविशेषार्थं तामेव प्रार्थयते । वरा सर्वत उत्कृष्टा श्रीकृष्णस्य वरणीया वा तनुर्यस्याः सा श्रीराधा मम लोचनं कदा पुनातु । तद्विलासेतरदर्शनेच्छै वाऽशुद्धिस्तद्रहितं । कदा करिष्यतीत्यर्थः अहह इति खेदे । तादृश्याः श्रीराधाया अदर्शनेनैव मम परमखेद इत्यर्थः । कीदृशी वरतनुः । रतेशेन वल्लभेन विहितं पुष्पादिभिर्निर्मितप्रशस्तमत्युत्कृष्टशयनं यत्र । तादृशे कुंजमन्दिरे समुपगतापि द्वारदेशांतं प्रापितापि प्रियस्य श्रीकृष्णस्य सविधे सन्निधौ साभिलाषिता अभिलाषसहिता या त्रपा लज्जा तयाऽतिसरसं यथास्यात्तथा । अनभियियासयाऽभिमुखगमनेच्छाविरहेण वक्त्रं विवृत्य विर्वार्तितं परावर्त्तितं कृत्वा प्रियस्यामुखानवलोकनेन अनुपश्चात्तिष्ठता तिष्ठंति सहसितं यथा स्यात्तथा हिताभिः सवयोभिः प्रियस्यांकविभृता अंके धारिता पुनात्विति संबंधः । अत्र त्रपया मुखविवर्त्तनं साभिलाषत्वादवस्थानं अति विदग्धाभिः सखीभिः प्रियोत्संगे समर्पणात्सरसत्वं द्रष्टव्यम् । त्रयोविंशत्यक्षरं वृत्तं । अद्रितनया छन्दः नजभजभाजभौलघुगुरुबुधैर्निगदितेयमद्रितनयेति सूत्रम् । नगणजगणभगणजगणजगणजगणभगणलघुगुरुभिः सिद्ध्यति । 181 ।

अर्थ—प्रियतम के द्वारा पुष्पों से बनाई गई है कमनीय शय्या जिसमें, ऐसे निकुंज-मन्दिर के द्वार पर अवस्थित, मिलन की लालसा से समुत्पन्न लज्जा से अत्यन्त सरस प्यारे को अनदेखा करते हुए मुंह फेरकर सामने जाने से कतराती हुई सुन्दर श्रीअंग वाली वृषभानुदुलारी, जिनको हितचिंतक, समान अवस्था वाली चतुर सखियाँ हंसाती हुई कुंज भवन में ले जाकर प्रिय के अंक में विराजमान कर रही हैं—मेरे नेत्रों को (इस रूप में दर्शन देकर) पवित्र करें। अर्थात् नित्यविहार के अतिरिक्त आजतक जो कुछ देखा है उनसे ये नेत्र अशुद्ध हो गये हैं ।। 181 ।।

मूल—वासन्तीये नव्यागारे विकचकुसुमपरिचलदलिनिनदे
दोर्भ्यामादृण्वानं राधां चलितललितकरयुगलकिसलयाम् ।
तापिच्छातिश्यामं कंचित्तरुणमरुणसरसिजदलनयनं तर्षन्ती
मे दृष्टिः किम्वा कलयति सुकृतसुफलमिह विषयम् ।। 182 ।।

श्रीराधारतिलम्पटस्यश्रीराधानुचरीरूपप्राप्तस्वदृष्टिगोचरतामाशास्ते। वासंतीये इति। मे मम दृष्टिः कंचित् अनिरूप्यस्वरूपं तरुणं युवानं। किं वा कलयति

पश्यति कदापि कीदृशं इह अस्मिन् शरीरे यानि सुकृतानि तदुद्देशेन कृतानि तदीय-संतर्पणादीनि तेषां शोभनफलरूपं विषयं। पुनः कीदृशं। वासंती माधवीलता तस्या इदं वासंतीयं। तादृशे नव्यागारे नवीनगृहे निकुंज इत्यर्थः। कीदृशे निकुंजे विकचानि विकसितानि यानि कुसुमानि तेषु-तेषु परितश्चलंतः अलिनो भ्रमरास्तेषां निनदो नितरां नादो यस्मिन्। तत्र राधां दोर्भ्यां आवृण्वानं बहिर्भवंती रुंधानमित्यर्थः। कीदृशीं राधां चलितललितकरयुगलकिशलयां। वलितं सभ्रूभंगं निवारणव्यग्रत-या तरलितं ललितं मनोहरं करयुगलरूपं किसलयं पल्लवं यस्याः सा तां। पुनः कीदृशं। तापिच्छात्तमालादपि अतिशयेन श्यामं रसावेशाद्द्विगुणोज्ज्वलीभूतश्याम-वर्णमित्यर्थः। पुनः कीदृशं। अरुणं यत्सरसिजं कमलं तद्वन्नयनं यस्य तं। अतिमदन-मदेन परमरक्तनेत्रमित्यर्थः। दृष्टिः कीदृशी। तर्षंती निरंतरमतितृष्णां वहंती। जात्यंतरं मत्ताक्रीडा छंदः। मत्ताक्रीडां स्वरशरयति मयुगगयुगमनुलघुगुरुभिः। मगणद्वयगुरुद्वयचतुर्दशलघुभिरेकेण गुरुणा च सिद्ध्यति।। 182।।

अर्थ--माधवी-लता-मण्डित-निकुंज में जहाँ नाना प्रकार के फूलों के गुच्छे लटक रहे हैं, और जिन पर झुण्ड के झुण्ड भ्रमर गुंजार कर रहे हैं--श्रीराधा को लाल ने अपनी भुजाओं में आवेष्टित कर रखा है, श्री जी प्रणय-कोप में भ्रूभंग-सहित छूटने के लिए अपने ललित कर-पल्लव संचालित कर रहीं हैं। इधर श्यामसुन्दर रसावेश में तमाल से भी अधिक श्याम हो उठे हैं। मदनमद से उनके नयन लाल कमलदल सदृश आरक्त हो गये हैं। ऐसे तरुण को चाहभरी मेरी दृष्टि, इस शरीर से किए पुण्यों के फलस्वरूप कब निहारेगी।। 182।।

मूल-- विश्रम मुग्धे! क्षणमिह शयने
वर्जय चंचलचपलितपाणी।
कश्चरणौ ते सुमुखि! सुखयिता
मा खलु कैतव तरलय वाचम्।
कस्तव गाता गुणगणमखिलं
को नु पुरः कथयति हितमर्थी।
क स्त्वहितोऽर्थोधिमर्दिति मिथुनं
जल्प मिथः स्मर हृदय निकुंजे।। 183।।

श्रीराधाकृष्णयोः परमरसमयं परस्परजल्पितं स्मर्त्तुं स्वांतःकरणमेव प्रार्थयते विश्रमेति। हे हृदय मनोहरवस्तुगामिन् मानस निकुंजे कुंजमध्ये मिथुनं स्त्रीपुंसौ स्मर चिंतय नामाग्रहणं। तदा तयो रतिरसमग्नतया अहं राधा अहं कृष्ण इत्य-

**स्फुरणात् । कीदृशं मिथुनं । इति एवं प्रकारेण मिथः परस्परं जल्पि जल्पनशीलं तमेव प्रकारं दर्शयन् कृष्णजल्पनमाह । हे मुग्धे सुंदरि इह शयने शय्यायां क्षणं विश्रम दूरागमनश्रममपनोदयेत्यर्थः । अथ श्रीराधा भवतु इति शयने गत्वा आलिंगनाय प्रसारितकरयुगलं कृष्णं प्रत्याह । हे चंचल स्मररसमदघूर्णायमानबहिरंतर-चपलितौ मत्परिरम्भणाय विलोलितौ पाणी वर्ज्जय दूरीकुरु स्वस्थाहं विश्रामं करोमि । कृष्ण आह । हे सुमुखि अतिशोभमानवदने मया करचालने त्यक्ते तव चरणौ मृदुसंवाहनेन कः सुखयिता सुखितौ करिष्यति । मत्करसंवाहनचातुर्येणैव सम्यक् विश्रामसुखं भविष्यतीति भावः । श्रीराधाह । हे कैतव कपटरूप वाचं मा तरलय वाक्चापल्यं मुंचेत्यर्थः । आलिंगनार्थं हस्तौ प्रसारयसि वदसि चरणौ संवाहयितुमिति । अतो महाकपटी त्वमिति । कृष्ण आह । मम वाक् चापलं यदि-ल्यक्ष्यति तदा तवाखिलगुणगणं को गाता । अतो निजगुणगानपराया मम वाचश्चा-पल्येऽपि प्रीतिरेव कर्त्तव्येति । श्रीराधा आह । कोवाऽर्थी सन् स्वकार्यार्थी भूत्वा पुरः अग्रतः हितं प्रियं न कथयति । त्वं कामातुरो मदनरंजनार्थमेवैवं वदसि न तु सहजान-न्यानुरागेणेति भावः । कृष्ण आह । अधिमत् मामधिकृत्य मयीत्यर्थः । त्वदृते त्वां विना कोऽर्थः । कः पुरुषार्थोऽस्ति न कोऽपि । अतः सहजमहानुरागपारवश्येनैवत्वद्गुणगाने मम वाक् सदा वर्त्तते । अहं च सदा त्वदंगसंगैकरसजीवातुरिति । चतुर्विंशत्यक्षरं वृत्तं तन्वी छंदः । भूतमुनीनैर्यतिरिह भतनास्द्विभनयाश्च यदि भवति तन्वीति सूत्रं । भगणतगणनगणसगणभगणद्वयनगणयगणैः सिद्ध्यति ।। 183 ।।**

अर्थः——रसवार्ता में निमग्न प्रिया-प्रियतम की भावना करते हुए ग्रंथकार अपने मन से कहते हैंः——

हे मेरे हृदय ! रति-रस-परायण, अपने को भूले हुए, रसालाप में निमग्न मिथुन का अपने मानस-निकुंज में तू इस प्रकार स्मरण करः——प्रिया से प्रियतम कहते हैं——"हे मुग्धे ! तुम श्रमित हो गई हो । अतएव इस शय्या पर थोड़ी देर विश्राम कर लो ।". श्रीप्रियाजी जब शय्या पर विराज गईं तब आतुर प्रियतम हाथ फैलाकर आलिंगन हेतु उनकी ओर अग्रसर होने लगे । प्रिया ने सलज्ज भाव से कहा——"हे चंचल, तुम्हारे तन-मन मदन-रस से परिपूर्ण हैं, मैं श्रमित हूं, इस प्रकार बाहु-संचालन मत करो ।" प्रियतम बोले——"हे सुमुखि मैं तो तुम्हारे पदपल्लवों का संवाहन करके तुम्हें (और स्वयं को) सुख पहुंचाना चाहता हूं क्योंकि मेरे सदृश पैर दबाना अन्य किसी को नहीं आता ।" इस पर प्रिया ने कहा——"चेष्टा तो तुम परिरम्भन की कर रहे हो और बात पैर दबाने की । हे कपटरूप ! इस प्रकार छलना-भरी वाणी की चपलता छोड़ दो ।" प्रियतम ने उत्तर दिया——"प्रिये ! यदि तुम मेरे वाणी-चापल्य का निषेध कर दोगी तो तुम्हारे अनंत गुणों का गान कौन करेगा ?

इसीलिए आपने गुणों के गान में लगी हुई मेरी इस वाणी से भी आपको प्रीति करनी उचित है।" प्रिया बोलीं--"जो कार्यार्थी होता है वह इसी प्रकार मीठी बातें करता है, तुम स्मरार्त होकर ही इस तरह कह रहे हो, सहज अनन्य अनुराग से नहीं।" लाल ने कहा--मेरे लिए आपके सिवा कोई अर्थ (पुरुषार्थ) नहीं है, अतएव सहज ही महानुराग से विवश होकर मेरी वाणी आपके गुण-गान में लगी रहती है, सदैव एकमात्र आपका अंग-संग रस ही मेरा जीवन है ॥ 183॥

मूल-- वक्षसि हारं सुन्दरि ! वक्रं
समममिममनुवद शुभमिति विदधे।
नंदजमित्थं सारितहस्तं
किमपि मदनरसतरलितहृदयम्।
स्वीयमसाम्यं त्यक्तुमशक्तः
कथमिह कितव ! ऋजुकरणनिपुण-
श्चित्रमितीदं कापि वदन्ती
वसतु मनसि रसधुरि कृतनिलया ॥ 184॥

अथ श्रीकृष्णस्य समयोक्तविशेषे महारसभरगंभीरां प्रत्युक्तिं कृतवत्या राधायाः स्वहृदि वासं समाशंसते। कापि अनिरूप्यरूपवयोविलासवैदग्धीनिधिः। इति अमुना प्रकारेण वदंती मम मनसि वसतु वासं करोतु सदा तिष्ठत्वित्यर्थः। कं प्रति वदति तदाह। नंदजं श्रीकृष्णं प्रति। कीदृशं नंदजं। इत्थं वचनरचनाप्रकारेण सारित-हस्तं प्रसारितकरं। वचनप्रकारमाह। हे सुंदरि तव वक्षसि वक्रं हारं इममहं सममृजुं शुभं शोभनं च। अतिशयेन विदधे करोमि। त्वमनुवद अनुकूलं वद। कीदृशं नंदजं। किमपि अनिरूप्यं यथा भवति तथा मदनरसेन तरलितं लोलुपं सुरतकेलिव्यग्री-कृतं हृदयं यस्य तं। श्रीराधायाः प्रतिवचनमाह। इदं चित्रं इदमाश्चर्यं किं तत् स्वीयमसाम्यमनृजुत्वं रत्यर्थं वक्ररीतिचतुरत्वं त्रिभंगत्वं वा त्यक्तुमशक्तस्त्वं हे कपटिन्। कथमिह मम हारे ऋजुकरणे निपुणः वक्रस्यावक्रीकरणे चतुरः स्याः। तस्माद्व्याजेन ममोरसिजौ धर्त्तुमिच्छसि नैतत्स्पर्शस्तव सुलभ इतिभावः। कथं भूता राधा रसधुरि कृतनिलया रसधुरि रसस्य भारे कृतो निलय आश्रयो यस्याः। सा परमहारसिकैत्यर्थः। पंचविंशत्यक्षरा क्रौंचपदा छन्दः। क्रौंचपदा भ्मौ स्भौ ननना न्याविषुशरवसुमुनिविरतिरिह भवेत्। भगणमगणसगणभगणद्वादशलघुगुरुभिः सिद्ध्यति ॥ 184॥

अर्थ—मदनातुर लाल कहने लगे—हे सुन्दरि ! आपने वक्षस्थल पर जो हारावलि धारण कर रखी है वह टेढ़ी हो गई है, मैं इसे सीधी (श्रृंखलाबद्ध) करना चाहता हूं, अनुकूल उत्तर देने की कृपा करो।" ललना बोलीं—"हे कपटी ! आप स्वयं ही टेढ़ी बातें बनाने में पारंगत और त्रिभंग ललित (तीन जगह से टेढ़े) हो, आश्चर्य है ! जो अपनी टेढ़ को न मिटा सका, वह मेरी हारावली को भला कैसे सीधा करेगा ! इस बहाने से तुम जो चाहते हो वह सुलभ नहीं है।" हाथ फैलाते हुए लाल से इस प्रकार कहती हुई श्रीराधा मेरे मन में निवसित हों ॥ 184॥

मूल— लोलांघ्रौ सिंजन्मंजीरं
चलजघनरणितरसनं
क्वणत्करकंकणम् ॥
लोलत्केशं वक्त्राम्भोजे
श्रमजल कणभरनिचिते
त्रुटन्मणिहारलतम् ।
व्यातन्वानौ राधाकृष्णौ
सुरतमखिलरसनिपुणौ
सुधीर्विमलान्तरो ॥
भोगं दारादि थूत्कृत्य
प्रभवदनिमिषकवलितं
स्मरेन्नतु मंदमतिः॥ 185 ॥

अथ श्रीराधाकृष्णयोः सुरतकेलिरतयोः स्मर्त्तारं स्तौति। शोभमाना समस्त-महालोकोत्तरबुद्धीनामपि बुद्धितः धीर्बुद्धिर्यस्य स एव राधाकृष्णौ स्मरेत्। संभाव्यते स्मरतीति। न तु मंदा अभद्रा मतिर्यस्य स स्मरेत्। कीदृशः। विमलं विशुद्धं मधुरं भावाढ्यं अंतरं अंतःकरणं यस्य स किं कृत्वा स्मरेत् भोगं भुज्यमानं दारादि स्त्र्यादि थूत्कृत्य अनादृत्य। कीदृशं भोगं प्र समर्थो योऽभवन् प्रभुर्ब्रह्मादीनामपि भोगनाशने निमिषः कालस्तेन कवलितं ग्रस्तं। श्रीराधाकृष्णौ कीदृशौ। सुरतं व्यातन्वानौ विविधप्रकारेण विस्तारयंतौ। पुनः कीदृशौ। अखिलरसनिपुणौ अखिले सर्वप्रकारे सुरतरसे निपुणौ दक्षौ कीदृशं सुरतं। लोलांघ्रौ चंचले चरणे सिंजंतौ शब्दं कुर्वन्तौ मंजीरौ नूपुरौ यत्र। पुनः कीदृशं। वक्त्रांभोजे लोलंतः चपलीभवन्तः केशा यत्र चूडाया वेणीबंधस्य च रतावेशेन मुक्तत्वात्। तत्रत्यपुष्पादेः प्रथममेव च्युतेः कीदृशे वक्त्रांभोजे। श्रमजलकणभरनिचिते। श्रमजलकणानां भरैरतिशयैर्निचिते व्याप्ते। पुनः कीदृशं सुरतं त्रुटन्मणि हारलतं। त्रुटंत्यो मणिमय्यो हारलता यस्मिन्। षड्विंशाक्षरं भुजंगविजृंभिता छंदः। वस्वीशाशाछेदैर्ममतनगुणरसैर्लगैर्भुजङ्ग-

विजृम्भितेति सूत्रम्। मगणद्वयतगणनगणत्रयरगणसगणलघुगुरुभ्यां सिद्ध्यति ॥ 185॥

अर्थ--नित्यविहार का भजन करने वाले रसिक उपासकों की प्रशंसा करते हुए ग्रंथकार कहते हैं--मणिमय हारावली टूट रही है, श्रम-जल कणों से मुख-कमल व्याप्त हो उठे हैं, केश-पाश के खुल जाने से पुष्प गिर रहे हैं, अलकावलि छूटी हुई है, कंकणों की ध्वनि हो रही है, गतिशील जघनस्थली के कारण कर्धनी मुखरित है, इस प्रकार विपरीत रति-रस का विस्तार कर रहे सम्पूर्ण रस की विलसन में प्रवीण युगल का स्मरण मधुरभावापन्न, महालोकोत्तर बुद्धिशाली रसिकजन ही कर पाते हैं, मन्दमति साधारण व्यक्ति नहीं। इन रसिकजनों ने ब्रह्मादिकों के भी भोगों को क्षय कर देने में समर्थ काल से ग्रसित स्त्री-पुत्रादि रूप भोगों का सर्वथा तिरस्कार कर दिया है ॥ 185॥

मूल-- प्रसृतरतिरणारम्भगाढाग्रहे बद्ध-
तृष्णः कठोररम्यतत्पाणिजा
रतिखरशरभरेण विस्तीर्णवक्षस्थले
चिह्नितो बाहुपाशैर्मुहुः संयतः।
निविडदशनघातसंदोहसम्बाधितो
मृष्टविम्बाधरे चंचलाभिः, करांगु-
लिभिरवधृतो निकुंजावनौ राधया
कृष्णवीरः सदा मानसे तिष्ठतु ॥ 186॥

अथेति महारभसेन सुरतसंग्रामे विचित्रविक्रमं कुर्वतः कृष्णस्य राधया रतिरणाविष्टया विजीयमानस्य स्वमनसि सदावस्थितिं प्रार्थयते। कृष्णवीरः कृष्णसाटोपः। रतियुद्धाय राधया आकर्षकश्चासौ वीरश्च। अत्यंतरतिरणोत्साहवांश्च। राधया सह सदा मम मानसे तिष्ठतु वसतु। एतदवस्थो हि सोऽतिमाधुरीचमत्कारसीमां प्राप्तः। कीदृशः। तस्य रतिरणस्यारंभे यो गाढोऽतिशयित आग्रहस्तत्र बद्धतृष्णः। स्वस्यरत्यावेशेतिसस्पृहः। श्रीराधाया वा तदावेशे। पुनः कीदृशः। मुहुर्वारं वारं बाहुपाशैः संयतो बद्धः। पुनः कीदृशः। निविडो निरंतरकृतो यो दशनघातसंदोहो दशनक्षतसमूहस्तेन मृष्टो यो बिम्बाधरस्तस्मिन्संबाधितो व्रणितः पुनः कीदृशः। चंचलाभिः अव अवनम्य धृतः। कुत्र निकुंजावनौ निकुंजमन्दिरगतभूमौ रतिसंमर्दातिशयेन। पुष्पशय्याया इतस्ततो गतत्वात्। चंड वृष्टिप्रपातनामादंडकः ॥ 186॥

अर्थ--रति-रण के आरम्भ में चाह-चौंप के उत्साह से भरकर, कठोर नखों के अग्रभाग रूपी तीरों से प्रिया के विशाल वक्षस्थल को चिह्नित करते हुए, बार-बार

बाहुपाश में बांधकर निरन्तर किये गये दशन-क्षतों से बिम्बाधरों को पीड़ित करते हुए, निकुंज स्थित शय्या पर इतस्ततः क्रीडारत चंचल हस्त-कमलों की उंगलियों से विलास की प्रगाढ़ता को प्रकट करते हुए और रति-युद्ध के लिए श्रीराधा को आकर्षित करते हुए उन्हीं से पराजित होकर प्रिया सहित मेरे मन में विराजमान होवैं ॥ 186 ॥

मूल—— जव जय नवनिकुंजवृन्दाद्यवृन्दावने,
नित्यकेलीकलाकल्पकातर्क्यधामावधे ।
मनसिजदृढदर्पचूर्णीकर, श्रीमदं-
गांगशोभैकरत्नाकराभीरपल्लीपते ।
शरदरुणसरोजसौन्दर्यकाष्ठापरि-
भावदक्षेक्षणाक्षिप्तपूर्णेन्दुवक्त्रद्युते ।
प्रणयरससमुद्रकल्लोलमालातर-
द्राधिकाप्राणसर्वस्व देहि स्वपादे रतिम् ॥187॥

**अथ श्रीराधाकांतं प्रति स्वात्मभूतस्य श्रीराधारसैकवर्षणतया परमानुरागं तस्मिन् प्रार्थयते । श्रीकृष्णे परममहानुराग एव राधापरमसख्यस्य लक्षणं । परस्पराविनाभावात् । जय जयेति । हे नवनिकुंजवृन्दाढ्यवृन्दावने नित्यकेलिकला-कल्पक अपूर्वापूर्वरतिहारस्फूर्तिकरैरनंतप्रकारैरनंताश्चर्यजातिलतातरुकृतकुंजैः संपन्ने वृन्दावने नित्यमविरलं केलीषु कलानां वैचित्रीणां कल्पक निर्माणकर । जय जय उत्कर्षमाविष्कुरु अत्यादरे । हे अतर्क्यधामावधे अतर्क्याणां धाम्नां प्रभावाणां परमावधे । हे मनसिजदृढदर्पचूर्णीकर । मनसिजः कामस्तस्य यो दृढो दर्पः सुन्दरोहमिति, तस्य चूर्णीकरं दूरीकारकं यत्परमं श्रीमदंगांगं अंगं प्रत्यंगं तस्य शोभाया एकोऽसमो महान् रत्नाकरः समुद्रस्तत्संबोधनं हे आभीरपल्लीपते आभीरग्रामस्तस्य पते । हे शरदरुणसरोजसौन्दर्यकाष्ठापरीभावदक्षेक्षण । शरत् कालीनान्यरुणकमलानां यानि सौन्दर्याणि तेषां काष्ठातिशयस्तस्य परीभावस्तिर-स्कारस्तत्र दक्षे ईक्षणे नेत्रे यस्य हे तादृश । क्षिप्तस्तुच्छीकृतः पूर्णेंदुर्यया तादृशी वक्त्र-द्युतिः श्रीमुखदीप्तिर्यस्य । हे तादृश । प्रणयरससमुद्रे प्रेमरसमहांभोधौ कल्लोल-मालासु महातरंगश्रेणीषु तरंती क्रममाणा या राधा सैव तस्या वा प्राणसर्वस्व देहि स्वपादे रतिं स्वपादे मम रतिमनुरागं देहि । अर्णवनामा दंडकः ॥ 187 ॥**

अर्थ——नई-नई कुंजों के पुंजों से मंडित श्रीवृन्दावन में, नित्यविहार की अनंतानंत कलाओं के प्रकाशक, इस अद्भुत धाम के प्रभावों की परमावधि, अंग-अंग की कलियों के सम्मिलन से तरंगित सुषमाओं के एकमात्र सागर, मदन के दर्प को दलन करने वाले, अपने नेत्रों से शरदकालीन अरुण कमलों की अतिशय शोभा को

लज्जित करते हुए, प्रेमरस-वारिधि की उत्तुंग तरंगों में कल्लोल करती हुए श्रीराधा ही जिनकी प्राण-सर्वस्व हैं, ऐसे हे व्रजपति ! अपने श्रीचरणों की रति मुझे प्रदान कीजिये ।। 187 ।।

मूल-- अखिल भुवनरन्ध्रसंरब्धकीर्ते सुरज्येष्ठ-
मुख्यामरानुह्यकर्मन्नतिक्रांतमायागते ।
निखिलनिगममूर्द्धरूढप्रभाव प्रभो !
नंदसूनो महानीलरत्नच्छवे हाटकाम्बर
निरवधिकरुणारसाधीर चेतो नमद्,
वृन्दकामावलि पूर्तिर्वहिर्मुखा नोकहाङ्घ्रिद्वय
प्रबलबहुलविघ्नसंच्छित्तिकल्पाभिधा-
भीरनारीमहाभाग्यराशे निजे देहि पादे रतिम् ।। 188।।

अथ श्रीकृष्णं बहुधा संबोध्य तच्चरणे स्वस्यानुरागं प्रार्थयते अखिलभवनस्य समस्तजगतो रंध्रेऽवकाशे संदृब्धा संग्रथिता कीर्तिर्यस्य तत्संबोधनं । किं च । हे अतिक्रांतमायागते । अतिक्रांता मायागतिर्येन गम्यत इति गतिः । माया द्वैतप्रपंचो गतिस्तत्कार्यत्वात्तदतीतेत्यर्थः । यद्वा । मायाया गतिरतिक्रांता येन । मायायाः संसारापादिकाया गतिः संचारो यत्र नास्ति तदाश्रितानां मायया मोहयितुमशक्यत्वादिति । निखिलनिगमस्य समस्तवेदस्य मूर्द्धा मस्तकं उपनिषत् तत्र रूढ़ः प्रख्यातः प्रभावो महिमा यस्य । तत्संबोधनं हे प्रभो सर्वं कर्त्तुमकर्त्तुमन्यथाकर्त्तुम् समर्थ । हे नन्दसूनो नन्दस्य पुत्र । नंदपुत्रः सन्नेव त्वं अचिन्त्यमहिमा न रूपांतरेणेत्यर्थः । हे महानीलरत्नच्छवे महेन्द्रनीलमणिवच्छविर्द्युतिर्यस्य । हे हाटकांबर स्वर्णप्रभवसन । हे निरवधिकरुणारसाधीरचेतः । निरवधिर्निःसीमो यः करुणारसस्तेनाधीरं व्यग्रं चेतश्चित्तं यस्य तत्संबोधनं । हे नमद्वृन्दकामावलीपूर्तिर्वहिर्मुखानोकहांघ्रिद्वय । नमतां प्रणमतां यद्वृन्दं समूहस्तस्य कामावली मनोरथपरंपरा तस्याः पूर्त्तौ पूरणे वर्हिर्मुखा देवता तदनोकहस्तद्वृक्षः । कल्पवृक्ष इत्यर्थस्तद्रूपमंघ्रिद्वयं यस्य तत्संबोधनं । किं च । हे प्रबलबहुलविघ्नसंछित्तिकल्पाभिध । प्रबलिष्ठा बहुला अनेके ये विघ्नास्तद्भक्तिं प्रति बाधकास्तेषां संछित्तौ सम्यङ्नाशने कल्पाः समर्था अभिधा नाम यस्य तत्संबोधनं । हे आभीरनारीमहाभाग्यराशिरूप निजे पादे मम रतिमनुरागं देहि । अर्णवनामा दंडकः ।। 188 ।।

अर्थ—विश्व के कण-कण में जिनकी कीर्ति व्याप्त हो रही है, बड़े-बड़े देवता भी जिनका पार नहीं पाते, मायातीत, समस्त वेदों के सिरमौर उपनिषदों में जिनकी महिमा भरी हुई है, महानीलमणि के समान कांति वाले, पीतांबरधारी, जीवों के लिए असीम करुणा-रस से अधीर बना रहता है चित्त जिनका और जो कल्पवृक्ष-रूपी अपने चरण-कमलों की कृपा से भक्तों के मनोरथों को परिपूर्ण करते रहते हैं, अनेकानेक बड़े-बड़े विघ्नों के विनाश करने में समर्थ है नाम जिनका, हे गोपियों के महाभाग्य-राशि-स्वरूप ! अपने श्रीचरणों की रति प्रदान कीजिए ॥ 188 ॥

मूल— चलदचलजगद्विधातः परानंदसंदोहसंपन्नमूर्ते-
ऽच्युतानंतमाहात्म्य देवाधिदेव ! प्रभो !
प्रकृतिमुपगतेऽपि विश्वे, स्वहेतेरुपर्य्याविरुद्भासि
वृन्दावने नित्यवासिन्जगन्मंगलैकावधे,
सकलगुणगणैकसिंधो, सदारब्धतारुण्यलावण्यभूमे।
दलन्नीलपद्मच्छवे चारुहासेक्षण-
प्रणतममुमनंतमग्रे जनं कंचिदाराधनाकल्पमप्यल्पकं,
श्रीराधिकावल्लभ स्वीयमालोकय ॥ 189 ॥

अथ स्वीयतया मां पश्येति श्रीराधावल्लभं प्रार्थयते। हे राधिकावल्लभ अमुं मद्विधं कंचिज्जनं त्वत्प्रापकगुणादिरहितं स्वयमेव स्वीयं आलोकय स्वीयतया पश्य। मदीयोऽयमिति जानीहि। अथवा तव स्वं धनं राधिका तदीयत्वेन जानीहि। प्रियसंबंधस्यातिप्रियत्वात् त्वत्कृपयैव सा मामंगीकरिष्यतीति भावः। हे चलदचल-जगद्विधातः। चलज्जंगमं अचलं स्थावरं। तस्य जगतः विधातः कर्त्तः। त्वत्प्रणत-जीवोऽहं। त्वयैव सृष्टो न ब्रह्मसृष्टिगोचरस्तत्स्वमात्मीयं मां जानीहीति। हे परानंदसंदोहसम्पन्नमूर्त्ते। परः समस्तविषयानंदब्रह्मानंदभगवदानंदेभ्य उत्कृष्टो य आनंदसमूहस्तत्संपन्ना तत्संपत्तियुक्ता श्रीमूर्त्तिर्यस्य हे तादृश। हे अच्युत नित्य-स्वरूप भक्तहृदयात् कदापि न च्युतेति वा। हे अनंतमाहात्म्य अपरिमितमहिमन्। हे देवाधिदेव। ब्रह्मरुद्रादिनियन्तः। हे प्रभो सर्वसमर्थ। हे वृन्दावने नित्यवासिन्। कीदृशं वृन्दावनं। विश्वे समस्तप्रपंचे। प्रकृतिं कारणं उपगते प्राप्ते प्रलयंगतेऽपि स्वस्य हेतिरस्त्रं सुदर्शनं तदुपरि आविः प्रकटं यथा भवति तथा उत्कर्षेण भासि। भासनशीलं। समासेनैकपदं। हे जगन्मंगलैकावधे। जगतां यत् मंगलं परमश्रेयो

हेतुस्तस्य राकावधिः सीमा । अतः परः श्रेयोहेतुर्नास्तीत्यर्थः । हे सकलगुणस्यैक-समुद्र । हे सदारब्धतारुण्यभूमे । सत् उत्कृष्टं आरब्धं नवीनं यत्तारुण्यं यद्वा सदा सर्व्वदैव आरब्धं कृतप्रारम्भं यत्तारुण्यं यौवनं कैशोरमित्यर्थः । तेन यल्लावण्यं कांतिः तस्या भूमे स्थान । हे दलन्नीलपद्मच्छवे । विकसन्नीलकमलद्युते इत्यर्थः । हे चारुहासेक्षणा । चारुहास्यपूर्वकमीक्षणं यस्य हे तादृश अमुं जनं कीदृशं । अग्रे प्रणतं । पुनः कीदृशं । अनन्यं उपास्यांतररहितं । समस्तकर्मादित्यागेन त्वदेकशरणं वा । पुनः कीदृशं । अकल्पमपि । आराधनेऽकल्पमशक्तं । व्यालनामा दंडकः ।। 189 ।।

अर्थः—हे स्थावर-जंगम सृष्टि के आदि कारण (मैं आपकी ही रचना हूं)! हे आनंदवपु भक्तों के हृदय से कभी न जाने वाले! हे अच्युत! अनन्त महिमाशाली! देवाधिदेव ! हे प्रभो! प्रलयकाल में जगत् के नष्ट हो जाने पर भी जो आपके द्वारा रक्षित होकर नित्य-नवीन बना रहता है, ऐसे श्रीवृन्दावन के शाश्वत निवासी ! जगन्मंगलकारी ! समस्त गुणों के सागर लावण्यमय-नित्य-तरुण ! खिलते हुए नील-कमल की भांति कान्ति वाले सुन्दर सस्मित दृष्टि से युक्त, हे श्रीराधावल्लभ लाल ! समस्त कर्मादि का त्याग करके एकमात्र आपकी ही शरण में आए हुए अनन्य गति, प्रणत एवं भजन-साधन से रहित इस जन (मुझ) को अपना लेने को कृपा करें। "यह मेरा ही है" ऐसा मान लेवें ।। 189 ।।

मूल— धिगमुमपगतत्रपं जीवकं मां सदाविद्ययाच्छन्नबोधं
महाकालतुण्डाग्रतिष्ठच्छरीरादिके नश्वरे
सदितिरतिविरूढमोहं तदर्थं कृतानेकदोषं मदान्धम्
महानित्यबोधैकरूपस्य वृन्दाटवीवज्रिणः ।
तव निखिलपादपंकेरुहाज्ञाततत्वं महादुर्भगं दुःखिनं
पूर्णकारुण्यवीचीचयान्दोलित श्रीहरे
सकलजगदधीशक त्वं, यदैनं सतां संगमापाद्य भक्ति-
प्रचारेण दुर्वारमोहादलं रक्षिता नेतरः।। 190 ।।

अथ ज्ञात्वापि मुह्यंतं जीवलोकं शोचन् श्रीकृष्णस्यैव तदुद्धारकत्वमाह । अमुं जीवलोकं लोकते पश्यति हितमहितं च स्वस्य विवेकेनेति लोकः पश्वादिविलक्षणो यो जीवस्तं धिक् । कीदृशं । अपगतत्रपं । ज्ञात्वाप्यत्यज्ञवच्चेष्टमानमित्यर्थः । ननु शास्त्रोपदेशादिना ज्ञातज्ञानस्य कथमज्ञानं तत्राह । अविद्यया सदा आच्छन्नः ।

तिरस्कृतो जातोऽपि बोधो यस्य। अन्यथाभूतवस्तुन्यन्यथाबुद्धिरूपामविद्यामेवाह। महान् ब्रह्मादीनामपि प्रभुर्यः कालः संहारकः। एष अवस्थाविशेषस्तस्य तुंडाग्रे मुखाग्रे तिष्ठद्वर्त्तमानं यच्छरीरधनपुत्रगृहकलत्रादिकं तस्मिन्नश्वरे नाशशीले अप्रतिकार्यनाशेपि सत् इति बुद्ध्या या रतिरासक्तिस्तया विशेषेण दार्ढ्यं प्राप्तो मोहो विवेको यस्य तं। पुनः कीदृशं। तदर्थं नश्वरशरीराद्यर्थं कृता अनेकदोषा रागद्वेष-रूपा येन तं। तत्रापि यत्किंचिद्विद्याधनादिना जातो यो मदो मत्तता तेनांधः। महा-पुरुषान् दृष्ट्वाप्यवहेलयंतमित्यर्थः। अतएव तव निखिलदं सर्वप्रदं यत्पादपंके-रुहं यत् पादपद्मं तस्य न ज्ञातं तत्त्वं याथार्थ्यं येन। अस्तु भजनं भजनीयत्वेन ज्ञानमपि नास्तीत्यर्थः तव कीदृशस्य महानित्यबोधैकरूपस्य महान् सर्वविषयिको नित्योऽ-विनाशी यो बोधो ज्ञानं तद्रूपश्चासावेकरूपश्च निजस्वरूपात्। कदापि न प्रच्युत इत्यर्थः। महांश्चासौ सर्वत ईशेभ्यो नित्यबोधैकरूपश्चेति वा तस्य। पुनः कीदृशस्य वृन्दाटव्या वज्रिण इंद्रस्य। कीदृशं लोकं महादुर्भगं अत्यंतमहदभाग्यं। पुनः कीदृशं। दुःखिनं भो श्रीहरे पूर्णं यत्कारुण्यं तस्य वीचीचयस्तरंगसमूहस्तेनांदोलित दीनोद्धरण-व्यग्रीकृत। हे सकलजगतां प्राणिमात्रस्य अधीशक स्वामिन् यदा शीघ्रमविलंबेन त्वमेव एतं जीवलोकं दुर्वारमोहादलं अत्यर्थं रक्षिता। न इतरोऽन्यः कोपि। अन्यस्य निरुपाधिमहाकारुणिकस्याभावात्। किं कृत्वा। सतां त्वद्भक्तानां संगमापाद्य कृत्वा भक्तिप्रचारेण भक्तिप्रवर्तनेन। जीमूतनामा दंडकः। प्रतिचरणविवृद्ध रेफाः स्युरर्णार्णवव्यालजीभूतलीलाकरोद्दाम शंखादय इति सूत्रम्॥ 190॥

अर्थ---अत्यंत दुर्भाग्य एवं दुःख की बात है कि नित्य और बोधस्वरूप श्रीवृन्दावन के इन्द्र आपके सब कुछ देने में समर्थ चरण-कमलों को न जानकर, शरीर, धन, स्त्री, पुत्रादि के नश्वर होते हुए भी इसमें विद्यमान दृढ़ मोहासक्ति के कारण उपार्जित यत्किंचित् विद्या या धन से उत्पन्न मद के द्वारा अंधे होकर इन्हीं के लिए अनेक प्रकार के राग-द्वेषादि दोष करता हुआ ब्रह्मादि का भी अंत करने में सक्षम काल के मुख के आगे सदैव उपस्थित रहकर, अविद्या से नष्ट हो गया है ज्ञान जिसका, ऐसे हिताहित को न समझने वाले जीवलोक को धिक्कार है। हे हरे! हे समस्त जगत् के स्वामी! अपनी परिपूर्ण कृपा-तरंगों से सिंचित भक्तजनों के संग द्वारा---भक्ति का प्रवर्तन करते हुए, मुश्किल से छूटने वाले मोह से---इस जीवलोक की शीघ्र रक्षा कीजिए॥ 190॥

मूल--- सदा राधाजानेश्चरणभजनानन्दतुच्छीकृतान्यो
गुरुर्यस्य द्वेधा सुमतिहरिवंशो महात्मा
प्रसिद्धः श्रीरुक्मिण्यप्रतिमसहजा चाभिधा कृष्णदासो
गिरां तस्य क्रीडा हरिरतियुजां साधुचित्तं धिनोतु॥191॥

इदानीं स्वग्रंथस्यानाप्तप्रणीतत्वाशंकयानुपादेयत्वं निराकर्त्तुं स्वस्य विशुद्ध-मातापितृयोनिजत्वेन परप्रतारकत्वाभावं श्रीगुरुमहिमानं स्वनाम्नश्च याथार्थ्यमादर्शयन् स्वग्रंथस्य साधुजनसंतोषहेतुतां लाभपूजाख्यात्यादिनिरपेक्षतया-शास्ते । तस्य कवेर्गिरां वाचां क्रीडा । श्रीकृष्णलीलोत्कीर्तनरूपा खेला कर्णानंदाख्यो वाग्विलासः । हरिरतियुजां भगवत्प्रेमयुक्तानां चित्तं । साधु तुच्छविषयेष्वनासक्तं धिनोतु प्रीणयतु । सर्वविषयरागनिवर्त्तकत्वेन भगवद्भक्तिवर्द्धकत्वात् । कर्णानंदस्य निर्विषयचित्ततर्पकत्वं युक्तं । तावता च श्रमसाफल्यमिति तदेव प्रार्थ्यते । न लाभपूजाख्यात्यादि तस्य भगवद्भक्तत्वात् । कस्य कवेः । यस्य सुमतिश्चासौ हरिवंशश्च तन्नामा तथा द्वेधा । प्रकारद्वयेन । जनकत्वेन वृन्दावनेश-रहस्यभक्तिमार्गोपदेष्टृत्वेन च गुरुः पूज्योऽतः सुमतित्वमेवाह । सदा सर्वकालं राधाजानेः श्रीराधापतेः । श्रीकृष्णस्य चरणयोर्भजनानंदेन भजनेन श्रवणकीर्तन सेवादिरूपेण समुद्भूतो य आनन्दस्तेन तुच्छीकृतोऽत्यंतोपेक्षो विषयाणां प्राप्तेरन्यः पुमर्थो येन स तथा अत्रापि राधाजानेरिति पदोपादानं तस्य गौरवातिशयार्थम् । पुनः कीदृशः । हरिवंशः महात्मा महान् सर्वतो यन्महद्वस्तु राधाकांतैकांतभाव-रूपं तन्मय आत्मा यस्य । तथाभूतत्वेन जगति प्रसिद्धः ख्यातः महोदारचित्तो वा महात्मा सर्वेभ्यो महासक्तेभ्यो रसप्रदानात् । यस्य प्रसूर्माता श्रीरुक्मिणीति संज्ञा सा कीदृशी । अप्रतिमसहजा निरुपमस्वभावा । अप्रतिमं यच्छ्रीकृष्णपरत्वं तत्सहजं स्वाभाविकं यस्या इति वा । यस्य चाभिधानाम कृष्णदास इति चकारान्नाममात्रं न किंत्वर्थोप्यस्ति । कृष्णस्य दास इति । सखीभिः सह वने पुष्पाणि चिन्वंतीं राधां निकुंजांतरं प्रत्याकर्षकस्य राधाकामिकपरवशस्य नवरसिककिशोरचंद्रस्य दास इत्यर्थः । तस्य गिरां क्रीडेति संबंधः । अत्र पितुर्मातुश्चात्यंतभगवत्परायणतया तज्जातस्य स्वस्यापि भगवत्परायणता स्वाभाविकीति सूचितं । अन्यत्रापि हि मातृपित्रुपार्जितधनेन पुत्रस्य धनवत्त्वं प्रसिद्धमेव । अतएव भगवत्प्रेरितेन पित्रा कृष्णदास इत्येव नाम कृतं । तस्मादेतादृशस्य माता पित्रुपार्जितभगवद्भक्तिमहाधनवतः । स्वतः कृष्णदाससमाख्यस्य वाग्विलासः साधूनां चित्तं । भगवद्भक्तिमहाधन-दानेन तर्प्पयितुमर्हतीत्यभिप्रायः । मेघविस्फूर्जिता छंदः । रसर्त्वश्वैर्यमौ न्यौ रर गुरुयुतैर्मेघविस्फुर्जिता स्यादिति सूत्रं । यगणमगणनगणयगणरगणद्वयगुरुभिः सिद्ध्यति ।। 191 ।।

अर्थ—अब अपने इस काव्य ग्रंथ "कर्णानंद" का उपसंहार करते हुए प्रामाणिकता के लिए महामहिम अपने माता-पिता, गुरु और स्वयं का नामोल्लेख तथा प्रयोजन का निरूपण करते हैं:—

सदैव श्रीराधा और उनके पति नन्दनन्दन के भजन-भाव-जनित आनंद से तुच्छ

कर दिये हैं संपूर्ण पुरुषार्थ जिन्होंने, उच्चकोटि के रसिक भक्तों को रस-भक्ति प्रदान करने वाले, महाप्रभु सुमति और जगत्प्रसिद्ध श्रीहितहरिवंशचंद्र जिसके पिता और गुरुदेव हैं, सहज रूप से भगवत्परायणा श्रीरुक्मिणी देवी जिनकी माता हैं, ऐसे इस कृष्णदास (कृष्णचंद्र) कवि की वाणी का यह विलास (कर्णानन्द काव्य) भगवत्प्रेमी रसिकजनों के चित्त को मात्र सुख पहुंचाने के लिए हुआ है, किसी सांसारिक लाभ, यश और प्रतिष्ठा के लिए नहीं ॥ 191 ॥

मूल-- श्रीकृष्णेतिप्रणयपराणां
तद्गाथाभिः सफलितवाचाम् ।
मादृग्दीनोद्धरणबलानां
कर्णानंदो विशतु सभायाम् ॥ 192 ॥

**पूर्वश्लोके मातापित्रोः स्वस्य च भगवत्परायणता प्रतिपादिता। स्वग्रंथश्रोतॄणां श्रद्धातिशयायातस्तदौद्धत्यपरिहाराय साधून् स्तुवन् स्वग्रंथस्य तदुपादेयतामाशास्ते । श्रीकृष्णेति प्रणयपराणामत्यंतप्रेमभक्तियुक्तानां साधूनां समाजेऽयं कर्णानंदाख्यो ग्रंथो विशतु प्रविशतु। तेषामादरविषयोऽयं भवत्विति वक्तव्येऽत्यंतविनीततया तेषां सभायां प्रविशत्वित्युक्तं । श्रीकृष्णेतिप्रणयपराणां कीदृशानां । तद्गाथाभिस्तस्य श्रीकृष्णस्य प्रतिपादिकाभिर्गाथाभिः संस्कृतप्राकृतादिप्रबंधैस्सफलितवाचां सफलीकृतवचनानां । पुनः कीदृशानां । मादृशो मद्विधा ये दीना दुःखिताः श्रीराधावल्लभसततभजनरसास्वादाभावेन खिद्यमानास्तेषामुद्धरणे बलं सामर्थ्यं येषां ते तथा तेषां सभायां विशत्विति संबंधः। अत्र श्रीकृष्णप्रेमरसाभिज्ञत्वं काव्यरचनाक्लेशज्ञत्वं परमकारुणिकत्वेनामात्सर्यात् । परकृतप्रबंधश्रद्धालुत्वं विशेषणत्रयेणोक्तं । तेन भगवत्प्रेमरसाविष्टतया तत्प्रतिपादकयत्किंचित्प्रबंधेष्वपि दोषगुणादिविचारमकुर्वाणैरमत्सरतया च परोत्कर्षकारिभिः साधुभिः स्वमाहात्म्येनैवायं ग्रंथो ग्राह्यो न तत्र मम मातापितृस्वगुणविशेषापेक्षा तेषामेवासाधारणमाहात्म्यादिति स्वगुणकथनौद्धत्यपरिहारः। वस्तुगत्या तु मातापितृस्वगुणविशेषनिमित्तोऽपि ग्रंथोत्कर्षो वर्त्तत एवेत्यभिप्रायः। मत्तानाम छन्दः। ज्ञेया मत्ता मभसगसृष्टेति सूत्रं। मगणभगणसगणैर्गुरुणा च सिद्ध्यति॥ 192॥**

अर्थ--नन्दनन्दन के श्रीचरणों में प्रेम रखने वाले, उनकी ही गाथा को गान करके अपनी वाणी को सफल करने वाले, और मुझ-जैसे दीन व्यक्ति के उद्धार करने में समर्थ रसिक संतों के समाज में यह कर्णानंद काव्य ग्रंथ प्रवेश करे ॥192॥

मूल—कर्णानंदोऽर्थकौमुद्यमिधसुरसभृट्टीकया संयुतोऽयम्
कृष्णाष्टम्यां शकाब्दे गगन-गगनबाणेन्दुसंख्ये व्यतीते।
श्रीराधावल्लभांघ्र्यम्बुरुहपरिसरे ग्रन्थ आविर्बभूव
श्रीवृन्दाकानने तद्रसतृषितमतेः श्रीमतः कृष्णदासात् ॥193॥

अयं कर्णानन्दः कर्णानन्दाख्यो ग्रंथः कृष्णदासात् सकाशात् आविर्बभूव। प्रकटो जातः। कीदृशो ग्रंथः। अर्थानां कौमुदी चन्द्रिका तद्वत्प्रकाशिका अर्थकौमुदी अभिधा यस्याः सा। अर्थकौमुद्यमिधा अभिधानं शोभनं रसं बिभर्ति पुष्णाति सुरसभृत्। अर्थकौमुद्यभिधा चासौ सुरसभृच्च तादृशी या टीका तया संयुतः सहितः कदा प्रकटः कृष्णाष्टम्यां कस्मिन् गगनं बिन्दुः गगनं बिन्दुः वाणाः पञ्च इन्दुश्चन्द्रः एकं तत्संख्ये शकाब्दे शकनरपतेः संवत्सरे व्यतीते अतिक्रान्ते सति। अंकानां वामगत्यायंच दशशतानि भवन्ति। कुत्र स्थले प्रकटः वृन्दाकानने। तत्रापि कुत्र प्रदेशे। श्रीराधावल्लभस्य श्रीहरिवंशत्वेन प्रसिद्धश्रीमूर्त्तेः अङघ्र्यम्बुरुहस्य पादपद्मस्य परिसरे सन्निधौ। कृष्णदासात् कीदृशात्। श्रीमतः विद्याविनयादिगुणसम्पद्युक्तस्य। पुनः कीदृशात् तद्रसतृषितमतेः। तद्रसे श्रीराधावल्लभरसे श्रीललितादिराधाप्रियसखीभोग्ये तृषिता तृष्णायुक्ता मतिर्बुद्धिर्यस्य तस्मात्। कर्णानन्दाभिधो ग्रंथः कृष्णदासेन निर्मितः। तट्टीका च तदारब्धा श्रीप्रबोधेन पूरिता। श्री कर्णानन्दाख्यो ग्रंथष्टीकया सहितः श्रीमतः कृष्णदासात् आविर्बभूव प्रकटो जातः सम्पूर्ण इत्यर्थः। ॥ 193 ॥

अर्थ—उज्ज्वल-रस की पोषक, चांदनी के सदृश अर्थ को प्रकाशित करने वाली "अर्थकौमुदी" नामक टीका से युक्त इस "कर्णानन्द" भक्तिकाव्य की रचना शकाब्द पन्द्रह सौ (वि. सं. १६३५) श्रीकृष्ण जन्माष्टमी के दिन श्रीराधावल्लभलाल के चरण-कमलों के सन्निकट रहकर उन्हीं के रस-पिपासु श्री कृष्णदास ने श्री वृन्दावन में की ॥ 193 ॥

**कर्णानन्दः**

**प्रभुपाद श्रीकृष्णचन्द्र गोस्वामि-प्रणीतः**

हितानन्द गोस्वामी

तैत्तिरीय श्रुति में परतत्त्व को रस कहा गया है। राधा-माधव इस रस के मूर्त एवं उपासनीय रूप हैं। राधा-कृष्णात्मक युगल की उपासना करने वाले सभी वैष्णव सम्प्रदायों में आराध्य तत्व के रूप में श्रीकृष्ण ही प्रतिष्ठित हैं। श्रीराधा की स्वीकृति उनके सर्वश्रेष्ठ उपासक एवं प्रेमास्पद के रूप में की गई है। राधावल्लभ सम्प्रदाय किंवा हित-धर्म के प्रवर्तक श्रीमन्महाप्रभु हितहरिवंश चन्द्र गोस्वामिपाद ने रस की बंकिमता को एक विलक्षण आयाम प्रदान करते हुए राधा-रति किम्वा राधा-प्राधान्य का मार्ग प्रशस्त कर दिया है।

कर्णानन्द के प्रणेता प्रभुपाद श्री कृष्णचन्द्र गोस्वामी का जन्म इसी परम्परा में हुआ है। प्रस्तुत ग्रंथ उनके द्वारा रचित अनेक संस्कृत-भक्ति-काव्यों में सर्वाधिक प्रसिद्ध है और प्रसन्न-गम्भीर-रचना-शैली, प्रेम-केलि का विशद और संयत वर्णन तथा ओजपूर्ण निष्ठा-कथन के कारण रसिक भक्तों का कण्ठाभरण बना हुआ है।

संस्कृत के भक्ति-साहित्य की निस्सन्देह इस ग्रंथ के द्वारा श्रीवृद्धि हुई है।

**मूल्य : रु०** (सजिल्द)
(अजिल्द)